अतीन्द्रियं गुणातीतं मनो लीनं यदा भवेत्।
अनौपम्यमभावञ्च योगयुक्तं तदादिशेत्॥ १८॥
तद्युक्तस्तत्समासक्तः शनैर्मुञ्चेत् कलेवरम्।

---

षोडश पञ्चमश्लोकाः, तद्रहितम्; यतो 'ज्योतिषां' मन आदीनां चक्षुरादीनां सूर्य्यादीनाञ्च उदयः, "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः।

कथमिदं लभ्यते? यदा तदेतद्धारणा भवति, किं नाद-धारणया फलं? मनोलय एव; तदुक्तम्।

"काष्ठे प्रवर्त्तितो वह्निः काष्ठेन सह शाम्यति।
नादे प्रवर्त्तितं चित्तं नादेन सह लीयते"॥ इति

द्वादशान्ते: तदेवाह मनो लीनमिति।

ननु मनोलये माध्यमिकवच्छून्यमेव तत्त्वं फलं स्यादित्यत आह आदिशेदिति। यदा मनो लीनं भवेत्तदा 'आदिशेत्' उपदिशेत् गुरुः, तदैव हि परमोऽधिकारः, न तु मनागपि विषयाभिलाषे सति मुख्योऽधिकारः। अथवा, 'तदादिशेत्' लक्ष्यमिति कथयेत् मध्यस्थः, मध्ये मनो विशेषयानि। उपमैव औपम्यम्, स्वार्थे ष्यञ्, न औपम्य यस्य मनसः अनौपम्यम्, न भावयति चिन्तयति इत्यभावम्, जीवपरमात्मनोरैक्यं योगः, तदुक्तम्; अथवा 'योगः' चित्तवृत्तिनिरोधः, तदुक्तम्।

अथवा योगयुक्तस्य मनसः किं लक्षणम्? अत आह, मन इति। यदा मनो लीनं भवेत् तथा अनौपम्यसमाय भवेत्, तदा 'योगयुक्तम्' प्राप्तयोगमिति 'आदिशेत्' कथये-दित्यर्थः। तस्मिन् अभिर्यस्य स तद्युक्तः। "भक्त्या लभ्यस्त्वन-

सुस्थितो योगचारेण सर्वसङ्ग-विवर्जितः ॥ २९ ॥
ततो विलीनपाशोऽसौ विमलः केवलः प्रभु
तेनैव ब्रह्मभावेन परमानन्दमश्नुते ।
परमानन्दमश्नुते ॥ ३० ॥ इति ॥ ३ ॥

इत्यथर्ववेदे नादविन्दूपनिषत् समाप्ता ॥ ३ ॥

---

अथ ब्रह्मविन्दूपनिषत् ।

ओँ मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च ।
अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥ १ ॥

---

न्यया" इत्युक्तत्वात्। तस्मिन् मनो यस्य तन्मना, 'असक्त' विषयेषु, छान्दस. सन्धि ; अथवा 'तन्मना' असक्त' इति पठनीयम्, 'सक्त' आसक्तस्तथैव। 'योगचारेण' योगमार्गेण, 'सुस्थित' स्वस्थीभूत, 'पाशा' कर्माणि, 'केवल: प्रभु.' जीवभावरहित । द्विकलि समाख्यर्था। अत्र प्रणवस्य नादबिन्दोर्निरूपणादकारादि वर्णे सत्यपि प्राधान्यान्नादबिन्दूपनिषत् सञ्ज्ञा।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका नादविन्दुके ॥ १ ॥
इति नादविन्दूपनिषद्दीपिका सम्पूर्णा ॥

---

ओँ ब्रह्ममनोधिका ब्रह्मविन्दूपनिषदुच्यते ।
अष्टादशी चतु:खण्डा शौनकग्रन्थविस्तरं ॥ १ ॥
चक्रो योग, तत्फल ब्रह्मसाक्षात्कार:, तद् ब्रह्म कीदृशम् ?

पक्षपात-विनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ ६ ॥
स्वरेण सन्धयेद् योगमस्वरं भावयेत् परम् ।
अस्वरेण हि भावेन भावो नाभाव इष्यते ॥ ७ ॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद् ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ ८ ॥
निर्विकल्पमनन्तञ्च हेतु-दृष्टान्त-वर्जितम् ।
अप्रमेयमनाद्यञ्च ज्ञात्वा च परमं शिवम् ॥ ९ ॥

---

'पक्षपातस्तु' तत्त्वचिन्तनम्, अतत्त्वविस्मरणञ्च, तेन 'विनिर्मुक्तं', रहितं यदा भवति, तदा ब्रह्म सम्पद्यते ।

प्रथमाधिकारिणं प्रत्याह, स्वरेणेति । 'स्वरेण' शब्देन गुरूपदेशेन प्रणवेन वा 'योगं' चित्तनिरोधं 'सन्धयेत्' आरभेत, 'अस्वरं' शब्दातीतं 'परं' वस्तु 'भावयेत्' चिन्तयेत् । 'भावेन' भाव्यमानेन चिन्त्यमानेन 'भावः' वस्तु परं ब्रह्म, 'अभावः' शून्यं नेष्यते, किन्तु अस्तीति 'इष्यते' गम्यते, इष सर्पणे, ब्रह्मसाक्षात्कारवतीत्यर्थः । ये गत्यर्थास्ते ज्ञानार्थाः । अथवा 'स्वरेण' अकारोकारोपलक्षितेन जाग्रत्स्वप्नाख्येन योगं कुर्यात्, यत्नातिशयेन जाग्रत्स्वप्नेऽपि तदभ्याससम्भवात्, 'अस्वरं' मकारोपलक्षितम् आनन्दस्थानम् 'परम्' अचेतनम् भावयेत् । 'अस्वरेण' मकाराख्येन भावेन मात्रया 'नाभावः' अभावो न, किन्तु पूर्णो 'भावः' तुरीयम् 'इष्यते' गम्यते इति तदुक्तममृतबिन्दौ,

"अस्वरेण मकारेण पदं सूक्ष्मञ्च गच्छति" इति ।

शब्दाक्षरं परं ब्रह्म यस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥१६॥
द्वे विद्ये वेदितव्ये तु शब्द-ब्रह्मपरञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥१७॥
ग्रन्थमभ्यस्य मेधावी ज्ञान-विज्ञान-तत्त्वतः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः॥ १८॥
गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।

---

निवृत्ते 'तमसि' अज्ञाने एकत्व भवति, एकमेव च अनुपश्यति

"पुष्कर पङ्कजे व्योम्नि पय करिकराग्रयो ।
ओषधीद्वीप विहग तीर्थ रागोरगान्तरे ।
पुष्कर तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च" ॥

इति विश्व ।

शब्दाक्षरमिति । शब्दश्च तदक्षरञ्च 'शब्दाक्षर' शब्दब्रह्म इत्यर्थ , तथा 'पर' ब्रह्म चैतन्यञ्च, एतद्द्वय वर्त्तते । 'विद्वान्' पण्डित , एतयोर्मध्ये यस्मिन क्षीणे सति यत् 'अक्षरम्' अक्षीण भवति, तत् अक्षर यदि 'ध्यायेत्' चिन्तयेत्, तथा यदि 'इच्छेत्' वाञ्छेत्　तर्हि शान्तिम् आप्नुयात्, नान्यथा, तदेव स्पष्टयति, द्वे इति । 'निष्णात' कुशल "निष्णातोऽभिज्ञ" "निष्णात" कौशले" इति पत्वम् । विचारज्ञात इत्यर्थ । 'मेधावी' ग्रन्थाभ्यासेन कृतबुद्धि 'ज्ञान शास्त्र' 'विज्ञान' साक्षात्कार', उभयो 'तत्त्वत' तत्त्व ज्ञात्वा, 'तत्त्वर्थ' पञ्चमी । गवामिति । 'गवा' सौरभेयीणाम् अनेकवर्णानामपि सतीना यत् क्षीर, तस्यैक-

प्रत्यभिज्ञाय दर्शयति, तदिति । 'तत्' ब्रह्म अहं ब्रह्मास्मीत्येवमाकारं स्मृतम् । सर्वेषां भूतानामधिवासोऽस्मिन् सर्वभूताधिवासः यद्वा भूतेष्वधिवसति, यस्मादधिकमिति सप्तमी, सर्वानुग्रहकत्वेन वासुदेव इति प्रसिद्धं तदहमस्मि, स एव वासुदेव इति प्रसिद्धं तदहमस्मि, स एव वासुदेव ईश्वरोऽपि, जीवेश्वरयोर्ब्रह्मैक्यमित्यर्थः । द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद वाक्यानां दीपिका ब्रह्मबिन्दुके ।
इति ब्रह्मबिन्दूपनिषद्दीपिका सम्पूर्णा ॥ ४ ॥

---

# अथ अमृतबिन्दूपनिषत् ।

**ओं शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः।**
**परमं ब्रह्मविद्याया उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥**

---

अमृतस्य यथा बिन्दुर्मर्त्यं हरति देहिनाम् ।
अत्यल्पोऽप्यष्टश्लोकोऽमृतबिन्दुस्तथा ह्ययम् ॥ १ ॥

योगसाधनस्य प्रथमां पीठिकामाह, शास्त्राणीति । मेधावीति । अध्ययनेन तर्काभ्यासेन मेधापि कर्तव्या इत्ययं यच्छ्रुति ।

"पण्डितो मेधावीति, बाल्यञ्च पाण्डित्यञ्च निर्विद्येति च" । स्मृतिरपि ।

"यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति ।

ब्रह्मविद्यायाः परमं कारणं जीवितमिति शेषः । 'उल्कावत्' चपलं विद्युदुन्मिषितं तुल्यं जीवितम्, 'अन्यथा' प्रकारान्तरेण कामक्रोधादिना 'नोत्सृजेत्' न क्षिपेत्, शास्त्राण्यधीत्य

ओङ्कारं रथमारुह्य विष्णुं कृत्वा तु सारथिम्।
ब्रह्मलोक पदान्वेषी रुद्राराधन तत्परः ॥ २ ॥
तावद्रथेन गन्तव्यं यावद्रथ पथि स्थित ।
स्थित्वा रथपथ स्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥
मात्रा लिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जिता ।
अस्वरेण मकारेण पद सूक्ष्मञ्च गच्छति ॥ ४ ॥

---

ये तदर्थसाक्षात्काराय प्रवर्तेत, प्रयत्नश्च वक्ष्यमाणो योगाभ्यास । यद्वा, ब्रह्मविद्याया परम कारणम् अध्ययनम 'अन्यथा' ज्ञानमप्राप्य नोत्सृजेत्, उल्कावत्' दीपिकावत् यथा दीपिका तमसि मार्ग प्रदर्शिता स्थानमप्राप्य नोत्सृज्यते तद्वत् शास्त्र साक्षात्कार पर्यन्त नोत्सृजेदित्यर्थ । ओङ्कार रथ गतिहेतुत्वात् रथ ओंकार विष्णुम्' उकारदेवता सारथि कृत्वा स ऋजुगती प्रेरक, तेन सारथ्य सम्भवति । अकार देवता यो ब्रह्मा तस्य य 'लोक' ब्रह्मसदन तस्य 'पद' मार्ग, तदन्वेषणशील, मकारदेवता यो रुद्र तदाराधने 'तत्पर' परायण ।

तावदिति । 'रथेन ओङ्कारेण तावद्गन्तव्यं यावत् रथ पथि' गन्तव्य गच्छन् तन्मार्गं स्थित समासान्तविधेरनित्यत्वादप्रत्ययो न कृत । स्थित्वेति । यदा तदेत्यध्याहार यदा रथस्य पन्था रथपथ समासान्तोऽकार तस्य 'स्थान' स्थिति निवृत्तिर्भवति, अत्र तिष्ठतिर्निवृत्तौ वर्त्तते तदा 'स्थित्वा' क्रियत्काल विलम्ब्य रथम् 'उत्सृज्य' त्यक्त्वा 'गच्छति' साध्यसाधनभाव रहितं स्थान प्रविशतीत्यर्थं, शांकार्योपासना-परिवासित चेतसो यतयो ब्रह्मपदवीमनुप्राप्य प्रव्रजन्तीति

शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते ॥५॥
प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥

---

श्रुतेः। 'मात्राः' अकारादयः, तासां 'लिङ्गं' जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग इत्यादि, तस्य 'पदं' स्थानं जागरादि त्यक्त्वा 'शब्देन' स्वरेण 'व्यञ्जनेन च' मकारेण 'वर्जितं' रहितम्। 'अस्वरेण' स्वरातिरिक्तेन मकारेण अन्तरङ्ग-साधनेन 'सूक्ष्मं पदं' तुरीयाख्यं गच्छति।

शब्दादीति। शब्दादीनि पञ्च 'विषयाः' तदुपलक्षितानीन्द्रियाणि 'अतिचञ्चलं' सर्वेन्द्रियविषयव्यापि मनश्च 'आत्मनः' सूर्यस्थानीयस्य, रश्मय इति, 'चिन्तनम्' आत्मैक्यापादनमिति यावत्, स प्रत्याहार इत्यर्थः; तदुक्तं याज्ञवल्क्येन।

"यद्यत् पश्यति तत्सर्वं पश्येदात्मानमात्मनि।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः" ॥ इति।

प्रत्याहार इति। यमनियमासनानि तु बाह्याङ्गत्वात् न गणितानि। यमनियमौ तु;

"अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः।
आस्तिक्यं ब्रह्मचर्यञ्च मौनं स्थैर्यं क्षमाभयम्॥
शौचं जपस्तपो होमः श्रद्धातिथ्यं सुरार्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्।
एते यमाः सनियमा उभयोर्द्वादश स्मृताः॥"

इति द्रष्टव्यौ। 'तर्कः' मननं 'समाधिः' निदिध्यासनं 'रुचिरं' मनोहरं गुरूपदिष्टं रूपं 'चिन्तयेत्' ध्यायेत्। रुचिर इति।

यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥७॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
किल्बिषञ्च क्षयं नीत्वा रुचिरञ्चैव चिन्तयेत् ॥८॥
रुचिरे रेचकञ्चैव वायोराकर्षणन्तथा ।
प्राणायामास्त्रयः प्रोक्ता रेचक-पूरक-कुम्भकाः ॥९॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायत-प्राणः प्राणायामः स उच्यते ॥१०॥२
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ।

---

'रुचिरे' चिन्त्यमाने सति रेचकं कुर्य्यात्, चकारात् कुम्भकम्, तथा वायो 'राकर्षणम्' अन्तर्नयनं कुर्य्यात् ।

प्राणायामत्रयं कुर्य्यादित्याह, प्राणायामा इति । 'प्राणायामाः' निरोधाः 'त्रयः' त्रिविधाः । प्राणायाममन्त्रमाह, सव्याहृतिमिति । व्याहृतिं शिरसोरपि सप्रणवत्वं बोद्धव्यम्, तदुक्तम् ;

"एता एतां सहैतेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायत प्राणः प्राणायामः स उच्यते ॥" इति ।

'एताः' सप्त व्याहृतीः, 'एतां' गायत्रीम्, 'एतेन' शिरसा, 'एभिः' प्रणवैः, शक्तौ सत्यां त्रिः पठेत्, अशक्तौ तु सकृत्पठेत् ।

प्रत्येकं रेचकादीनां लक्षणमाह, उत्क्षिप्येति । वायुम् 'उत्क्षिप्य' ऊर्द्ध्वं नीत्वा 'आकाशम्' उदरं कृत्वा 'निरात्मकं' प्राणरहितम् ;

शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥
न चोच्छ्वसेन्नानुच्छ्वसेन्नैव गात्राणि चालयेत् ।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥
वक्त्रेणोत्पलनालेन वायुं कृत्वा निराश्रयम् ।
एवं वायुर्ग्रहीतव्यः कुम्भकस्येति लक्षणम् ॥ १३ ॥
अन्धवत् पश्य रूपाणि शृणु शब्दमकर्णवत् ।
काष्ठवत्पश्यते देहं प्रशान्तस्येति लक्षणम् ॥१४॥३॥

---

"आत्मा देह मनो ब्रह्म स्वभाव धृति बुद्धिषु । प्रयत्ने चापि" इति, अपि शब्दात् प्राणे चेति विश्वाभिधानात् । 'आत्मान प्राण' शून्यत्वेन योजयेत्, न रेचक इत्यर्थः ।

अनुच्छ्वसेदिति । नञस्थिता समास । उच्छ्वासानुच्छ्वासौ न कुर्यात्, किन्तु निरोध लक्षण मनुच्छ्वासमेव कुर्यात्, स एव गृहीत इत्युक्तत्वात् । वक्त्रेणेति । उत्पलस्य नालमिव वायुसञ्चार हेतुत्वात्, तादृशेन वक्त्रेण वायु 'निराश्रय' बहिर्निर्गत कृत्वा यदवस्थान स कुम्भक , प्रकारान्तरेण कुम्भक पर्वमिति । यथा बहि कृत, तथा वक्त्रेण 'ग्रहीतव्य' अन्तरेव । भीत्वा रोद्धव्य इति द्विविध कुम्भकस्य लक्षणम्, तदुक्तम् ।

"पूरणादि रेचनान्त प्राणायामस्तु वैदिक ।
रेचनादि पूरणान्त प्राणायामस्तु तान्त्रिक" ॥ इति ।

प्रत्याहार प्राणायामयोर्लक्षणे उक्त्वा धारणां लक्षयितु तद धिकारिणं तावत् लक्षयति, अन्धवदिति । 'पश्य' इ धियम् । इति शेषश्च , 'तं' त्व स्वीय देह काष्ठवत् पश्य निरभि

मनः सङ्कल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ।
धारयित्वा तथात्मानं धारणा परिकीर्त्तिता ॥१५॥
आगमस्याविरोधेन ऊहनं तर्क उच्यते ।
यं लब्ध्वाप्यवमन्येत समाधिः परिकीर्त्तितः ॥१६॥
भूमिभागे समे रम्ये सर्वदोष-विवर्जिते ।
कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मण्डलम् ॥१७॥
पद्मकं स्वस्तिकं वापि भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यगुत्तराभिमुखः स्थितः ॥१८॥

---

मानितया ; प्रत्याहारस्याभीति । इदमेव लक्षणम् ; अन्यस्य यथा रूपादिविकारो न भवति, तद्वत् यस्य रूपदर्शनेऽप्यविक्रिय मन, काष्ठवत् देहेऽप्याकाररहित, स प्रत्याहार इत्यर्थं । मन इति । 'मन' मानसं 'सङ्कल्पक' सङ्कल्पकार्यं 'ध्यात्वा' विचिन्त्य 'आत्मनि' बुद्धौ प्राणे वा संक्षिप्य 'आत्मान' प्राण बुद्धिं वा 'धारयित्वा' स्थिरीकृत्य यत् तिष्ठति सा धारणा उक्ता ।

चतुर्णां लक्षणमुक्त्वा शिष्टयोस्तर्कसमाध्योराह, आगमेत्यादि । आगम विरोधेन ऊहनं वाक्यार्थ-प्रसङ्गात् ; यं 'लब्ध्वा' प्राप्यापि इदमपि 'अवमन्येत' अवजानीयात् यदर्थेऽपि शब्दादिष्टमिति लभ्यते, य प्राप्य सर्वमन्यत् न रोचते, स समाधिरित्यर्थः "य लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" इति गीतोक्तेः । 'मनोमयीम्' आत्मचिन्तनरूपां मन्त्रमन्त्रादिना दिग्बन्धादिरूपां वा 'मण्डल' मण्डलब्राह्मणम् आदित्यदेवत्य "य एतन्मण्डलं तपति" इत्यादिरूपम् । पद्मकमिति । पद्मकादीनां लक्षणानि योगयाज्ञवल्क्ये उक्तानि ।

"ऊर्वोरुपरि विप्रेन्द्र ! कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत् प्रचक्षते" ॥ इति ।

तथैव प्रकारान्तरेण स्वस्तिकमुक्तम् ।

"सीवन्यामात्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फन्तु दक्षिणे दक्षिणेतरम् ।
एतच्च स्वस्तिकं प्रोक्तं सर्वपापप्रणाशनम्" ॥ इति ।
"गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वे पादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम्" ॥ इति ।
'योगासनं' सिद्धासनम्, तदुक्तं हठप्रदीपिकायाम् ।
योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत्
मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरं
चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥ इति ।

मतान्तरे च ।

"मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य सिद्धासनमिदं भवेत् ॥
एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
गुप्तासनं वदन्त्यन्ये प्राहुर्मुक्तासनं परे ॥
यमेष्विव मिताहारोऽप्यहिंसा नियमेष्विव ।
मुख्यं सर्वासनेष्वेकं सिद्धाः सिद्धासनं विदुः ॥
चतुरशीतिपीठेषु सिद्धमेव सदाभ्यसेत् ।
द्विसप्ततिसहस्रेषु सुषुम्नामिव नाडिषु" ॥ इति ।

नासिका-पुटमङ्गुल्या पिधायैकेन मारुतम् ।
आकृष्य धारयेदग्निं शब्दमेवाभिचिन्तयेत् ॥१९॥४॥
ओमित्येकाक्षरं ब्रह्म ओमित्येकेन रेचयेत् ।
दिव्यमन्त्रेण बहुशः कुर्यादात्ममल-च्युतिम् ॥२०॥
पश्चाद्ध्यायेत पूर्वोक्तं क्रमान्मन्त्रं विनिर्दिशेत् ।

---

योगार्थमासनमिति वा। उत्तरेति। योगस्य उत्तरमार्गप्रदत्वात्। नासिकेति। एकं नासिकापुटम् अङ्गुल्या पिधाय 'एकेन' पार्श्वेन 'मारुतं' वायुम् आकृष्य 'धारयेत्' अन्तः स्तम्भयेत्, 'अग्निं' तेजोमयम्, अर्थप्रकाशकञ्च शब्दमेव अभिचिन्तयेत्।

कं शब्दम्? इत्यपेक्षायामाह, ओमित्येकाक्षरमिति। ओमित्येतेनैव मन्त्रेण 'एकेन' पूरणाद्भिन्नेन पार्श्वेन रेचयेत् वायुं; तदुक्तम्।

"बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्।
धारयित्वा यथाशक्ति पुनः सूर्य्येण रेचयेत्"॥ इति।

'दिव्यमन्त्रेण' प्रणवेन 'आत्ममल-च्युतिं' शरीरमल-नाशं नाडीशुद्धिं, प्राणायामैर्नाडीमला नश्यन्ति ततस्तासु वायुप्रचारो भवति। 'आत्ममलः' पाप, तस्य 'च्युतिं' नाशम् इति वा; तदुक्तम्।

"नित्यमेव प्रकुर्वीत प्राणायामांस्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः"॥ इति।

'पश्चात्' प्राणायामैः पापं दग्ध्वा 'ध्यायेत्' चिन्तयेत् 'पूर्वोक्तं' शब्दमेवाभिचिन्तयेदित्युक्तं, 'क्रमशः' अनुक्रमेण अकारोकार-मकारार्द्धमात्राः लोक वेद-देवाग्न्यादि सहिताः घोषिण्यादि-मात्राः क्रमसहिताश्च 'ध्यायेत' चिन्तयेत्, 'मन्त्रं' मन्त्र 'निर्दि-

**स्थूलातिस्थूल-मात्रायां नातिमूर्ध्वमतिक्रमः ॥२१॥**
**तिर्य्यगूर्द्ध्वमधो दृष्टिं विनिधार्य्य महामतिः ।**
**स्थिरस्थायी विनिष्कम्पस्तदा योगं समभ्यसेत् ॥२२॥**

---

नीत्' उद्धरेत्; अत्र सन्धेरत्यविभक्तिको निर्देशः। स्थूलेति। 'स्थूलमात्रा' अशीति प्रणवावृत्तिपर्य्यन्तं धारणम्; तदुक्तम्।

"प्रातर्मध्यदिने सायमर्द्धरात्रे च कुम्भकान्।
शनैरशीति-पर्य्यन्तं चतुर्वारं समभ्यसेत्" ॥ इति।

'अतिस्थूला' ततोऽप्यधिकाधिकं धारणम्; एवं स्थूलायां मात्रायाम् अतिस्थूलायाञ्च मात्रायाम् 'अतिम्' अतिशयम् ऊर्द्ध्वं नयेत्, मात्रास्वतिशयं न कुर्यादित्यर्थः। कस्मात् न कुर्यात्? प्रत्युत अतिशये शीघ्रं सिद्धिर्भवति? इत्यत आह, अतिक्रम इति। एव हि वायोरतिक्रमे दोष उक्तः,

"हिक्का श्वासश्च कासश्च शिरःकर्णादि वेदना।
भवन्ति विविधा दोषाः पवनस्य व्यतिक्रमात्" ॥ इति।

तिर्य्यमिति। 'तिर्य्यक्' पार्श्वे धावन्तीम् 'ऊर्द्ध्वम्' आकाशगामिनीम् 'अधः' वा चरणन्यस्तां 'दृष्टिं' नेत्रकान्तिं 'विनिधार्य्य' धृत्वा 'महामतिः' स्थूललक्ष्यः 'स्थिरः' चित्तेन, 'स्थायी' दृढासनः। दृष्टेस्तिर्य्यक्त्वमुक्तम्।

"अन्तर्लक्ष्य बहिर्दृष्टिर्निमेषोन्मेषवर्जिता।
एषा हि शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता" ॥ इति।

ऊर्द्ध्वत्वमप्युक्तम्।

"भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी"। इति।

अधस्त्वमप्युक्तम्।

"दृष्ट्या निश्चलतारया बहिरधः पश्यन्" ॥ इति।

तालमात्रा तथा योगी धारणा योजनन्तथा ।
द्वादशमात्रो योगस्तु कालतो नियतः स्मृतः॥२३॥

---

'विनिष्कम्पम्' विशेषेण निष्कम्पम् 'योगम्' उत्तमं योगं तदा अभ्यसेत्। निष्कम्पोऽप्युत्तमो योगः, सकम्पो मध्यमः, सस्वेदः कनीयान्; तदुक्तम्।

"कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे।
उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं मुहुः"॥ इति।

तस्मात् 'निष्कम्प' अपेगत, निष्कम्प उत्तम, विशेषेण निष्कम्प अत्युत्तम, तं समभ्यसेत्।

तालेति। अयं पदार्थो योगशास्त्रे 'कालतः' कालेन 'नियतः' एकरूपः स्मृतः। कः पदार्थः? एकतालो वायो कालतो बहिः स्थूलस्य मध्ये प्रवेशः, मध्यस्थस्य च बहिर्निर्गमनं, सा नियतकाला भवति, यावत्काला पूर्वदिने, तावत्काला परदिने, इति मात्रा नियतकाला भवति, अन्यथा कल्पपर्यन्तं भूविवरे भवति।

षोडश पूरणे चेत्, चतुःषष्टिः कुम्भने, द्वात्रिंशत् रेचने इति; 'योगः' समाधिः, सोऽपि नियतकालः, अन्यथा कल्पपर्यन्तं भूविवरे समाधिस्थस्य विदेहकैवल्याभावप्रसङ्गः। 'धारणा' मनः सद्रूपकमित्यादि लक्षणा, सापि "धारयेत् पञ्च घटिका भवरोगैर्विमुच्यते" इत्यादौ नियतकालैवोक्ता, 'योजनं' संयोजनं प्राणापानयोः, यथा पूर्वदिने चेत् षोडश प्राणायामाः, तर्हि परदिने ततो न्यूना अधिका वा न भवन्ति। द्वादशमात्रो योगो नादबिन्द्वात्मकः, सोऽपि कालतो नियतः स्मृतः, परस्परं तुल्यकाला एव धोपिपादयो धेया इत्यर्थः। अयं च तालादिः पदार्थोऽपि कालतो नियतः स्मृतः, नियतकाल

अघोषमव्यञ्जनमस्वरञ्च अकण्ठताल्वोष्ठमनासिकञ्च
अरेफजातमुभयोष्ठवर्जितं यदक्षरं न क्षरते कदाचित्

---

मेव फलं ददाति परिच्छिन्नं, न तु कालापरिच्छिन्नं फलं ददातीत्यर्थः ।

तर्हि कालापरिच्छिन्नं फलं किम्? इत्यत आह, अघोषमिति। यदक्षरं तदपरिच्छिन्नफलमित्यर्थः, तत् किं ककारादिष्वन्यतमत्? नेत्याह, 'अघोष' वर्गाणां प्रथमा, द्वितीया, श ष साश्चाघोषा, ततोऽन्ये घोषा, तद्वत् भवति। तर्हि फलव्यञ्जनं तद्रूपं नेत्याह, अव्यञ्जनमिति। तर्हि अथ स्वरात्तद्रूपं नेत्याह, अस्वरमिति। न स्वरत्वं यस्य तदस्वरम्। तर्हि अ कु ह विसर्जनीयानां कण्ठः, 'इ चु य शानां तालु' उ पूपध्मानीयानामोष्ठौ, तद्रूपं नेत्याह, अकण्ठताल्वोष्ठम्, अत्र च, अकण्ठोष्ठमात्रविवक्षितत्वादसन्धिः, सन्धौ तु न्यूनाक्षरं छन्दः स्यात्। तर्हि नासिकानुस्वारस्य तद्रूपं नेत्याह, अनासिकमिति। तर्हि ऋ टु र षाणां मूर्धा, तदन्तर्भूतं नेत्याह, अरेफेति। 'रेफजातं' रेफवर्गो मूर्धन्य, तत्र भवतीत्यर्थः। तर्हि ऌ तु ल सानां दन्ता, तद्रूपं नेत्याह, उभयोष्ठवर्जितमिति। उभौ 'ओष्ठौ' आवरकौ यस्य उभयोष्ठौ दन्ता, तेन तदुच्चार्यो वर्णः, तत्र भवतीत्यर्थः। यद्यप्यव्यञ्जनमस्वरमिति वर्णमात्रं प्रतिषिद्धम्, एतावन्तो हि वर्णा, यदुत व्यञ्जनानि स्वराश्च, तथापि सामान्यतो विशेषतश्च प्रतिषेधार्थमघोषाद्युपादानम्।

तर्हि किं तदक्षरं? यस्य लक्षणं वाक्यम्, इत्यत आह, न क्षरते कदाचिदिति। नादात्मनस्य परं शान्तमित्यर्थः

यत्प्रतिपादनादमृतबिन्दुरिति ग्रन्थाभिधा। अथैतत् योग-
प्रक्रिया। यम-नियमाभ्यां क्षपित-वाङ्मदोषः, निर्जने तीर्था-
दिदेशे सिद्धचैले वा सिद्ध-स्वस्तिक-पद्म-भद्र-सिंहाद्यन्यतमदा-
सनमालम्ब्य नियतमुख,

धौतिर्वस्तिश्च नेतिश्च त्राटकं नौलिका तथा।
कपालभातिश्चैतानि षट्कर्माणि प्रचक्षते॥

इत्युक्तैः कर्मभिः प्राणसंयमेनैव वा शुद्धनाडीगणः, प्राणा-
यामाभ्यासेन सिद्धकेवल-कुम्भकः, अङ्गुष्ठादि-मूर्धान्त-मर्म-
प्रदेशेषु प्राणमनो-धारणाभिः प्रत्याहृतेन्द्रियगणः, पृथिव्यादि-
पञ्चधारणाभिः शुद्धभूत भौतिक तत्त्वः, सगुण-निर्गुण-ध्यानैः
क्षपिततमोमलः, उन्मनीभाव-लक्षणं समाधिमारुरुक्षुः, षट्चक्र-
भेदेन द्वादशान्तं ब्रह्मरन्ध्रमातिष्ठेत्। तत्प्रकारस्तु मूलबन्धो-
ड्डियानबन्धजालन्धरबन्धैः महाबन्ध-महावेध-शक्तिचालनैश्चापा-
नस्वमपानवायुमूर्ध्वमाकुञ्च्य, तेन मूलाधारगतं त्रिकोणस्थ-
मग्निं प्रज्वाल्य, तेन कन्दोत्थां कुण्डलीं सर्पाकारां पश्चिम-देह-
भागेन पूर्वदेहभागमष्टधावेष्ट्य, मुखेन पुच्छं गृहीत्वा, सुखच
सुषुम्णा सुखे प्रवेश्य, सुप्तां प्रताप्य, तामेव प्रबोध्य, रोधने
सुषुम्णा सुखं विरलीकृत्य, प्रसार्य, तत्र साग्निमिश्रं वायुं
मनसा प्रवेश्य, वंशदेशस्थ-वंशाकृति सुषुम्णायाः पर्वस्थानी
यानि चक्राणि षोडशारं समुच्चरन्, मनसा विष्णुचिन्तन सना-
थेन वायुग्नि सहायेन भिन्दानो, मूर्ध्नि सहस्रदलमाक्रामेत्,
इति। तदुक्तं हंसोपनिषदि। "तं विदित्वा न मृत्युमेति;
गुदमवष्टभ्य, आधाराद्वायुमुत्थाप्य, स्वाधिष्ठाने त्रिः प्रदक्षिणी-
कृत्य, मणिपूरकञ्च गत्वा, अनाहतमतिक्रम्य, विशुद्धौ प्राणान्
निरुध्य, आज्ञामनुध्यायन् ब्रह्मरन्ध्रं त्रिमात्रोऽहमित्येवं सर्वदा
ध्यायन् इति।

न च प्राणापानयोर्युगपन्निरोधे शूल-हिक्काश्वासादि दोष-प्रसङ्ग इति वाच्यम्, गुरूपदिष्टबोधत्रयस्य युगपदनुष्ठितस्य महिम्नः, अमृतसुखस्य महिम्नः, अमृतसुखस्य जलपूर्णघट-स्येव दोषानवकाशात्। अस्य च योगस्य फलमक्षरावगतिरूपं स्वरव्यञ्जन-वर्जितमित्युपक्रम्य अघोषमित्यादिना उपसंहृतम्।

षट् कर्माणि यथा—

"चतुरङ्गुल-विस्तारं सिक्तं वस्त्रं शनैर्ग्रसेत्।
ततः प्रत्याहरेदेतदाख्यातं धौतिकर्म तत् ॥ १ ॥
नाभिदघ्ने जले पायुन्यस्त-नालोत्कटासनः।
आधाराकुञ्चनं कुर्यात् प्रख्यातं वस्तिकर्म तत् ॥२॥
सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत्।
मुखान्निर्गमयेच्चैषा नेतिः सिद्धैर्निगद्यते ॥ ३ ॥
ईक्षते निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः।
अश्रुसम्पातपर्यन्तमाचार्यैस्त्राटकं मतम् ॥ ४ ॥
अमन्दावर्तवेगेन तुन्दं सव्यापसव्यतः।
नतांसो भ्रामयेदेषा नौली गोलैः प्रशस्यते ॥ ५ ॥
भस्त्रेव लोहकारस्य रेचपूरौ ससम्भ्रमौ।
कपालभाती विख्याता कफदोष-विशोषिणी" ॥६॥ इति।

बन्धत्रयं मुद्रिकाया व्याख्यातम्। महाबन्धो यथा।

"पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्।
वामोरूपरि संस्थाप्य दक्षिणं चरणं तथा ॥ १ ॥
पूरयित्वा ततो वायुं हृदये चिबुकं दृढम्।
निष्पीड्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत् ॥ २ ॥
धारयित्वा यथाशक्ति रेचयेदनिलं शनैः।
सव्याङ्गे च समभ्यस्य दक्षाङ्गे पुनरभ्यसेत् ॥ ३ ॥
मतमत्र तु केषाञ्चित् कण्ठबन्धं विवर्जयेत्।

येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति ।
अत समभ्यसेन्नित्य सन्मार्गं गमनाय वै ॥२५॥

---

राजदन्तद्वय तत्र जिह्वयोञ्च भवेदिति ॥ ४ ॥
अय खलु महाबन्धो महासिद्धि प्रदायक ।
कालपाशा महाबन्ध विमोचन विचक्षण ।
त्रयञ्च सर्वनाडीनामूर्ध्वगति प्रबोधक ” ॥ इति ।

महावेधो यथा।

“महाबन्धस्थितो योगी कृत्वा पूरकमाकधी ।
वायूना गतिमाक्रम्य निभृत कण्ठमुद्रया ॥ १ ॥
न्यस्तहस्तयुगो भूमौ निस्तल ताडयेच्छनै ।
पुटद्वय समाक्रम्य वायु स्फुरति सत्वरम् ॥ २ ॥
सोम सूर्य्याग्नि सम्बन्ध जायते चामृताय वै ।
मृतावस्था समुत्पन्ना ततो वायु विरेचयेत् ।
महावेधोऽयमभ्यासान्महासिद्धि प्रदायक ” ॥३॥ इति ।

शक्तिचालन यथा।

“पुच्छ प्रगृह्य भुजगीं सुप्तामुद्बोधयेद् बुध ।
निद्रा विहाय सा कृत्वा ऊर्द्ध्वमुत्तिष्ठते हठात्”॥१॥ इति।

अन्यत्रापि ।

सन्तप्तो वह्निना तत्र वायुना चालितो यदा ।
प्रसार्य्य फणभङ्गीम प्रबोधं याति तत्तदा” ॥१॥ इति ॥५॥

ननु प्राणस्तत्र तत्र प्रदेशे केनोपायेन नेतव्य ? इत्याह, येनेति । ‘असौ’ योगी ‘येन’ मनोलक्षणेन करणेन प्राण गन्तव्य ‘पश्यति’ प्रविश्य गन्तव्यतया निश्चिनोति, प्राण तेन एव मनसा सह तत्र तत्र याति, मनसा तत्तत्स्थान

हृद्द्वारं वायुद्वारञ्च ऊर्द्ध्वद्वारमतः परम्।
मोक्षद्वारबिलञ्चैव शुषिरं मण्डलं विदुः ॥ २६ ॥
भय क्रोधमथालस्यमतिस्वप्नातिजागरम्।
अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥२७॥
अनेन विधिना सम्यङ् नित्यमभ्यस्यतः क्रमात्।
स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २८ ॥
चतुर्भिः पश्यते देवान् पञ्चभिस्तुल्यविक्रमः।

---

ध्यानमेव तत्र मूलाधारादौ प्राणप्रवेशे उपाय इत्यर्थः। यतोऽयं प्राणप्रवेशे उपाय उपदिष्टः, अतो नित्यं 'सन्मार्गगमनाय' सुषुम्णामार्गप्रवेशाय 'समभ्यसेत्' मनोधारणादि कुर्य्यात्।

ननु येन मनो याति, तेनैव प्राण इत्यवगत उपायः, तयोर्मार्गः क्वास्ति? इत्यत आह, हृदिति। 'हृद' मनसः वायोश्च प्राणस्य 'द्वारं' प्रवेशमार्गः, सुषुम्णाख्यमूर्द्धद्वारं वर्त्तते, कण्ठादि मूर्द्धान्त पृष्ठवंशगामि सुषुम्णा द्वारमस्तीत्यर्थः। तत ऊर्द्ध्वं किमस्ति? इत्यत आह, अतः परमिति। 'अतः' अस्मात् द्वारात्परं मोक्षद्वारबिलं शिरो भित्त्वा निर्गतमस्ति, मोक्षस्य 'द्वारम्' उपायो ब्रह्मलोकः, तस्य क्रमविवरम्।

ननु ब्रह्मलोकस्य क्रममोक्षस्थानत्वात् सूर्य्यमण्डले व्यवधायके सति कथं तत्र गतिः? इत्यत आह, शुषिरं मण्डलमिति। सूर्य्यमण्डलस्य सच्छिद्रता, "द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ" इत्यादि स्मृतेरवसीयते।

इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥२८॥६॥
पार्थिवः पञ्चमात्राश्च चतुर्मात्राणि वारुणः ।
आग्नेयस्तु त्रिमात्राणि द्विमात्रो मारुतस्तथा ॥३०॥
एकमात्रस्तथाकाशो ह्यर्धमात्रञ्च चिन्तयेत् ।
सिद्धिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥३१॥

---

योगी वर्जमीयान्याह भयमिति। 'तुल्यविक्रम' देवैरेव, केवलञ्च ऐश्वर्यमुक्त छुरिकाया प्रदर्शितम् ॥ ६ ॥

पञ्चभूत धारणासु तदन्तीत धारणासु च कीदृश प्रणव स्वरूप ध्येयम् ? इति पृच्छन्त प्रति क्रमेणोत्तरमाह, पार्थिव इत्यादि। 'पार्थिव' पृथिवीतत्त्व धारणायामाश्रितयेत् प्रणवो भवति, तदा तस्य पञ्चमात्राणि रूपाणि ध्येयानि। 'वारुण' जलतत्त्व धारणायामुपास्यत्वेन चान्वितयेदित्यर्थं । अन्याये केवगुण छायामात्राकाशो द्रष्टव्य । अर्धमात्रमिति। तु' अध्याहृत्यर्थं, निरपेक्षीभूय अर्धमात्रन्तु चिन्तयितव्यमित्यर्थं ।

सिद्धिं पूर्वया चिन्तनायाः कोऽभिप्राय ? इत्यत आह, सिद्धिमिति। तत्तत्सिद्धिमभिप्रेत्य तत्तल्लोकजयाय तानि तानि पार्थिवादि रूपाणि 'मनसा' साधनेन 'आत्मना' स्वयम 'आत्मनि बुद्धौ चिन्तयेदित्यर्थं । शरीरे पदादिमूर्धपर्यन्ते तत्तद्भूतस्थाने तत्तद्भूतस्थानलोकजयो भवति। भूतस्थानादि, यथा।

"भूमिरापस्तथा तेजो वायुराकाश एव च ।
एतेषु पञ्चदेवाना धारणा पञ्चधोच्यते ॥
पदादि जानुपर्यन्तं पृथिवीस्थानमुच्यते ।
आजानु पायुपर्यन्तमपा स्थान प्रकीर्त्यते ॥

द्वारं वायुद्वारञ्च ऊर्द्धद्वारमतः परम् ।
मोक्षद्वारबिलञ्चैव शुषिरं मण्डलं विदुः ॥ २६ ॥
भय क्रोधमथालस्यमतिस्वप्नातिजागरम् ।
अत्याहारमनाहार नित्यं योगी विवर्जयेत् ॥२७॥
अनेन विधिना सम्यङ् नित्यमभ्यसतः क्रमात् ।
स्वयमुत्पद्यते ज्ञान त्रिभिर्मासैर्न संशयः ॥ २८ ॥
चतुर्भिः पश्यते देवान् पञ्चभिस्तुल्यविक्रमः ।

---

ध्यानमेव तत्र मूलाधारादौ प्राणप्रवेशे उपाय इत्यर्थः । यतोऽयं प्राणप्रवेशे उपाय उपदिष्ट, अतो नित्य 'सन्मार्गगमनाय' सुषुम्णा मार्गप्रवेशाय 'समभ्यसेत्' मनोधारणादि कुर्य्यात् ।

ननु येन मनो याति, तेनैव प्राण इत्यवगत उपाय, तयोर्मार्गं क्वास्ति ? इत्यत आह, द्वारिति । 'द्वार' मनस वायोश्च' प्राणस्य 'द्वार' प्रवेश मार्गं, सुषुम्णाख्यमूर्द्ध्वद्वार वर्त्तते, कण्ठादि मूर्द्धान्त पृष्ठवंश गामि सुषुम्णा द्वारमस्तीत्यर्थं । तत ऊर्द्ध किमस्ति ? इत्यत आह अत पर मिति । 'अत' अस्मात् द्वारात्पर मोक्षद्वारबिलं शिरो भित्त्वा निर्गतमस्ति, मोक्षस्य 'द्वारम्' उपायो ब्रह्मलोक, तस्य कारणविवरम् ।

ननु ब्रह्मलोकस्य क्रममोक्षस्थानत्वात् सूर्यमण्डले व्यवधायके सति कथ तत्र गति ? इत्यत आह, शुषिर मण्डल मिति । सूर्यमण्डलस्य सच्छिद्रता, "द्वाविमौ पुरुषौ लोके सूर्यमण्डल भेदिनौ" इत्यादि स्मृतेरवगम्यते ।

इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥२९॥
पार्थिवः पञ्चमात्राणि चतुर्मात्राणि वारुणः ।
आग्नेयस्तु त्रिमात्राणि द्विमात्रो मारुतस्तथा ॥३०॥
एकमात्रस्तथाकाशो ह्यर्धमात्रन्तु चिन्तयेत् ।
सन्धिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥३१॥

---

योगे वर्जनीयान्याह भयमिति। 'तुल्यविक्रम' इत्येवम्, कैवल्यस्य ऐश्वर्ययुक्तं क्षुरिकायां प्रदर्शितम् ॥ ६ ॥

पञ्चभूत धारणासु तदतीत धारणासु च कीदृशं प्रणव स्वरूपं ध्येयम्? इति पृच्छन्तं प्रति क्रमेणोत्तरमाह, पार्थिव इत्यादि। 'पार्थिवे' पृथिवीतत्त्व धारणायामाश्रितश्चेत् प्रणवो भवति, तदा तस्य पञ्चमात्राण्यपि रूपाणि ध्येयानि। 'वारुण' जलतत्त्व धारणायामुपास्यत्वेन आश्रितश्चेदित्यर्थः। अस्यादौ एकैकगुण ह्रासाभावाद्ध्रासो द्रष्टव्यः। अर्धमात्रमिति। तु' शब्दान्वयार्थं, निरपेक्षीभूय अर्धमात्रन्तु चिन्तयितव्यमित्यर्थः।

तर्हि पूर्वमात्रा चिन्तनानां कोऽभिप्रायः? इत्यत आह, सिद्धिमिति। तत्तत्सिद्धिमभिप्रेत्य तत्तल्लोकजयाय तानि तानि पार्थिवादि रूपाणि 'मनसा' साधनेन 'आत्मना' स्वयम् आत्मनि बुद्धौ चिन्तयेदित्यर्थः। शरीरे पदादिमूर्धपर्यन्ते तत्तद्भूतस्थाने तत्तद्भूतस्थानलोकजयो भवति। भूतस्थानादि यथा।

"भूमिरापस्तथा तेजो वायुराकाश एव च।
एतेषु पञ्चदेवानां धारणा पञ्चधोच्यते॥
पदादि जानुपर्यन्तं पृथिवीस्थानमुच्यते।
आजानु पायुपर्यन्तमपां स्थानं प्रकीर्त्यते॥

**त्रिंशत्पर्वाङ्गुलः प्राणो यत्र प्राणः प्रतिष्ठितः।**
**एष प्राण इति ख्यातो बाह्यप्राणस्य गोचरः ॥३२॥**

---

आपायोर्हृदयान्तश्च वह्निस्थानं तदुच्यते।
आहृन्मध्याद् भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम् ॥
आ भ्रूमध्यात्तु मूर्द्धान्तमाकाशमिति चोच्यते" ॥ इति।

प्राणायाम उक्तः, आयम्यत्वेन प्राण उक्तः, अग्निहोत्रादावुपास्यत्वेन चैक उक्तः, तयोः को भेदः? इत्यत आह। त्रिंशदिति। त्रिंशत्सङ्ख्यकानि पर्वाङ्गुलानि मानमस्य त्रिंशत्पर्वाङ्गुलः, अङ्गुलान्यनेकप्रकाराणि सन्ति, तदर्थं पर्वेति विशेषणम्, तिर्य्यक्चतुरङ्गुलमितस्य काष्ठस्य चतुर्थोऽंशः पर्वाङ्गुलं, तदेव मुख्याङ्गुलम्, तदुक्तम्।

"त्रिकाङ्गुष्ठेन धीमाभिर्मुष्टिमङ्गुलिभिः कृताम्।
चतुर्धा विभजेदेको भागो मुख्याङ्गुलं स्मृतः" ॥ इति।

द्वादशाङ्गुलता, पञ्चदशाङ्गुलता चान्यत्रोक्ता, सा तु मध्यमाङ्गुलिमध्यपर्वमितादि स्थूलाङ्गुलाभिप्रायेण, प्राणस्य स्थूलसूक्ष्मतारतम्याभिप्रायेण वैलक्षण्यविशेषः। तथा च याज्ञवल्क्यः।

"शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः।
चतुर्दशाङ्गुलं केचिद् वदन्ति मुनिसत्तमाः" ॥ इति।

गोरक्षेण तु षडधिकान्युक्तानि ॥

"षट्त्रिंशदङ्गुलो हंसः प्रयाणं कुरुते बहिः।
वामदक्षिणभागेन तत प्राणोऽभिधीयते" ॥ इति।

वामे षड्दश, दक्षिणे च तथेति मिलित्वा त्रिंशदिति वा न विरोधः, अयमायम्यत्वेनोक्तः प्राणः, एष प्राणो यत्र 'प्रतिष्ठितः', यदाधारत्वेन सहिमानं गतः स प्राण इति

अशीति-षट्शतञ्चैव सहस्राणि त्रयोदश।
लक्षश्चैकोऽपि निःश्वासः अहोरात्र-प्रमाणतः ॥३३॥
प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे।
समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥३४॥

---

'ध्यातः' उपास्यत्वेन प्रसिद्धः परमात्मा। तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह, प्राणेति। यो वायुः प्राणः स 'गोचरः' विषयः हंसस्य इत्यर्थः। अर्थादन्यस्तु हंस इति स्वरूपभेद।

ननु वायुप्राणस्य जन्मायुषि कियान् व्यापारः? इति पृष्टे तस्य परिगणनस्य बह्वायाससाध्यत्वादहोरात्र व्यापार परिगणनमाह, अशीतिरिति। एका अशीतिः, षट्शतञ्च, त्रयोदश सहस्राणि च, एको लक्षश्चाहोरात्रेण तावन्निश्वास। सङ्कलितोऽपि ११३६८०। अनेन मानेन वायुर्निश्वासप्रमाणं गणनीयम्; श्रुतिविरोधश्चिन्त्यः। तत्र हि "एकविंशति सहस्राणि षट्शतानि दिने दिने" इत्युक्तम्। हंसोपनिषदि च षट्सङ्ख्यया एकविंशति सहस्राणि षट्शतान्यधिकानि भवन्तीति। अत्रोक्तं नासिका प्राणापेक्षया अन्यत्र प्रत्ये गणना; इह तु रन्ध्रान्तराणि मुखादीन्यपेक्ष्याधिकस- ङ्ख्योक्तिः, नासिके प्राणे वहति रन्ध्रान्तरेष्वपि किञ्चिद्वहनं भवति, तेनाधिकसङ्ख्यासिद्धिरित्यविरोधमिदं। यदि तु षट् सङ्ख्याधिकानि षट्शताशीति मान्यता, किन्तु गुणितानीत्य ध्याहृत्य षट्सङ्ख्यया गुणितान्येकविंशति सहस्राणि षट् शतानि चेति व्याख्या. अधिकानीति च किञ्चिदधिकानीत्य शीतिरेवेति व्याख्या। अत्र च दशसहस्राणि सिद्धमत्ययेन

व्यानः सर्वेषु चाङ्गेषु सदा व्याप्य तिष्ठति ।
अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३५॥
रक्तवर्णो मणिप्रख्यः प्राणो वायुः प्रकीर्त्तितः ।
अपानस्तस्य मध्ये तु इन्द्रगोपक-सन्निभः ॥ ३६॥
समानस्तस्य मध्ये तु गोक्षीर-स्फटिक-प्रभः ।
आपाण्डुर उदानस्तु व्यानो ह्यर्चिसमप्रभः ॥ ३७॥
यस्येदं मण्डलं भित्त्वा मारुतो याति मूर्द्धनि ।

---

वयस्त्रीणि, तेन त्रिंशत् स्थानानि इति व्याख्या आन्ध्रीयते, तदा त्वष्टोनसहस्रमिदं । स्यात् ।

धारणोपयोगितया प्राणादीनां स्थानान्याह, प्राण इति । पञ्च प्राणा वर्त्तन्ते ; तेषां मध्ये यः वायुः 'प्राणः' प्रथमगमन कर्त्ता, स हृदि वर्त्तते इत्यर्थः । व्यानः सर्वेष्वङ्गेषु कथं वर्त्तते ? अत उक्तं व्याप्त्येति । त्रिविधेषु 'व्याप्य' आवरण-माच्छादनं कृत्वा व्याप्येत्यर्थः । अथ ध्यानोपयोगितया वर्णानाह, अथेति । मूल इति शेषः, पञ्चानामेव मुख्यत्वात् । ननु नाग कूर्म-कृकर देवदत्त धनञ्जयानां दशानामपि भाव्यम् । याज्ञवल्क्येन तु दशानां स्थानानि कर्माणि चोक्तानि । ७ । रक्तेति । रक्तवर्णो यो मणिः 'तत्प्रख्य' तत्प्रभ । 'तस्य मध्ये' गुदस्य मध्ये, 'इन्द्रगोप' कीटविशेषः रक्तवर्णो वर्षासु प्रथम दृश्यते । समानः 'तस्य मध्ये' नाभिदेशस्य मध्ये 'अर्चिः' वह्निशिखा । योगसाधनस्य प्रयोजनमाह, यस्येति । 'मण्डलं' षट्चक्रम् एतत् भेदयित्वा 'यस्य' साधकस्य एष मारुतो मण्डलं भित्त्वा मूर्द्धनि याति मूर्द्धस्फोटेन

यत्र यत्र म्रियेद्वापि न स भूयोऽभिजायते ॥
न स भूयोऽभिजायते ॥ ३८ ॥

इत्यथर्ववेदे अमृतबिन्दूपनिषत् समाप्ता ॥ ५ ॥

---

## ध्यानबिन्दूपनिषत्।

ओं योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया।
तच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥
विष्णुर्नाम महायोगी महाभूतो महातपाः।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तम ॥ २ ॥
यदि शैलसमं पापं विस्तीर्णं योजनान् बहून्।

भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥ ३ ॥
बीजाक्षरात्परं बिन्दुं नादं बिन्दोः परे स्थितम् ।
सुशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥ ४ ॥

---

'भेद' भेदकः नाशकः नास्ति । अत्र यद्दीक्षतः प्राक् श्लोकद्वय कैश्चित् पठ्यते, तद्यथा,

"योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥
विष्णुर्नाम महायोगी महाकायो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः" ॥ २ ॥ इति ।

तत्र "यदि शैलसमं पापम्" इत्यादि । तत्तु योगतत्त्वोपनिषदादिभूतम्, अत्र प्रमादतः पठितम् । बीजेति । 'बीजाक्षरं' सृष्टाक्षरं अकारादि वर्णं पञ्चाशद्वर्णबीजाद्यमिति पीठाक्षकर्णिकाया वर्णानां बीजत्वात् तस्मात्परं 'बिन्दुः' बिम्बपरं वर्तते ; बिन्दोः 'परे' भागे 'नाद' नादाक्षरं स्थितम् । तदुक्तं शारदातिलके ।

"सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादबिन्दु-समुद्भवः" ॥ इति ।

अत्र शब्दार्थे शब्दद्वारा प्रणवप्राप्तिरुच्यते । सनातनं नित्यं ब्रह्म निर्गुणं सगुणञ्च ; तत्र निर्गुणं यथा ।

नित्यः सर्वगतः सूक्ष्मः सदानन्दो निरामयः ।
विकाररहितः साक्षी शिवो ज्ञेयः सनातनः ॥

तथा ; निष्क्रियं निर्गुणं शान्तमानन्दमजमव्ययम् ।
अजरामरमव्यक्तमभेद्यं सनातनं ध्रुवम् ॥
ज्ञानात्मकं परं ब्रह्म सर्वं वेद्यं हृदि स्थितम् ।

"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जाता त्रिशक्तयः" ॥ इति ।

ताभ्यः क्रमेण रुद्र-ब्रह्म रमाधिपा जाताः ; ते च क्रमेण इच्छाशक्ति-क्रियाशक्ति-ज्ञानशक्ति स्वरूपाः, वह्नीन्द्वर्कस्वरूपिणो निरोधिकार्द्धेन्दु-बिन्दु रूपाः शक्तेरेवावस्थाविशेषाः ; यथा मिच्छा-क्रिया ज्ञानात्मत्व शक्तौ तदुत्पन्नत्वात् ; भाव-बिन्दोरव्यक्तो नादमात्रं शब्दब्रह्मात्मा स्वत उत्पन्नमिति ।

"क्रियायाः शक्तिप्रधानायाः शब्दशब्दार्थ कारणम् ।
प्रकृते बिन्दुरूपिण्याः शब्दब्रह्माभवत्परम्" ॥ इति ।

स शब्दब्रह्म, न तु शब्दार्थरूपम्, आन्तरः स्फोटः शब्दरूपो वा बाह्यस्फोटः शब्दब्रह्म तयोर्जडत्वात् ब्रह्मशब्दानर्हत्वात्, किन्तु चैतन्यमेव शब्दब्रह्म, तदुक्तम् ।

"अनादि निधन ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यत." ॥ इति ।

तद्बिन्दुरूप पवात्मैव सर्वशरीरेषु शब्दत्वेनाविर्भावः । तदुक्तम् ।

"सोऽन्तरात्मा तदा देवो नादात्मा यतते स्वयम् ।
यथा संस्थान भेदेन स भूयो वर्णतां गतः ॥
वायुना प्रेर्यमाणोऽसौ विच्छादाद्यतिं प्रयाति हि" ॥ इति ।

शब्दब्रह्मैव परानाम शब्दावस्था, सैव चैतन्यरूपा कुण्डलिनी शक्तिः ; तत पश्यन्त्यादिरूपेण वेदराशिराविर्भवति । इयं शब्दसृष्टिः । अर्थार्थसृष्टिः, शक्तो शक्तिभावमापन्नान्नादरूप-काल सहायात् मायावनबिन्दुरूपमापन्नात् सृष्टि स्थितिध्वंस-निग्रहानुग्रह कार्य्य पञ्चक कर्त्ता, अतएव जगन्निर्माण बीज-रूपो जगत् साक्षी सदाशिवो जात.; ततः क्रमेणैव रुद्र-विष्णु-ब्रह्माण उत्पन्नाः ; सर्वसृष्टिमूल-रूपादव्यक्तात् शुद्धगुणा-

अनाहतस्य शब्दस्य तस्य शब्दस्य यत्परम् ।
तत्परं चिन्तयेद्यस्तु स योगी छिन्नसंशयः ॥ ५ ॥
वालाग्रशत-साहस्रं तस्य भागस्य भागशः ।
तस्य भागस्य भागार्द्धं तज्ज्ञेयञ्च निरञ्जनम् ॥ ६॥

---

नादेन्दुबिन्दु सञ्ज्ञाः, शक्तेरेवावस्थाविशेषा द्रष्टव्याः । सर्व-दृष्टौ तु ब्रह्म विष्णु-रुद्राः सूर्य्येन्दु पावकाः इत्येवं क्रमा इति विशेष । मकारात्पराणि चौणि शक्तेरवस्थाविशेषाः, सप्तमी शान्ताख्या ; तत्र वर्णदेवता ब्रह्म विष्णु रुद्रेश्वर-शिव-सर्वेश्वराः शक्त्यान्तास्सप्तेत्युक्ताः । पञ्चधात्वपक्षे तु,

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।
पञ्चधा पञ्चदैवत्यः प्रणवः परिकीर्त्तितः." ॥

इत्यथर्वशिखोक्ता पञ्चदेवता द्रष्टव्याः । क्वचिदन्यथापि देवताकथनं सर्गभेदादेवेति द्रष्टव्यम् ।

प्रकृतमनुसरामः । ननु 'शब्दः' नादो यस्मात् तत् 'सुशब्द' शक्तिरूपं, तदपि परिस्थितमर्य्यादादेवाकारादि व्यस्यति, तस्मिन्नक्षरे क्षीणे सति निःशब्दं परमं पदं वर्त्तते शान्ताख्यं परं ब्रह्म । उक्तमेव स्पष्टयति ॥

अनाहतस्येति । सर्वत्र स्वरूपापेक्षं नपुंसकत्वं, 'तस्य' शब्दस्य यत् 'परं' कारणं शक्तिः 'तत्परं' तस्यापि परं सच्चिदानन्दरूपं, यो विन्दते सः 'छिन्नसंशयः' नष्टसन्देहः भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशया इत्यादि, श्रुतेश्च । तस्यात्यन्त-सूक्ष्मतामाह । वालाग्रेति । शतसहस्रार्द्धं 'भागशः' सन्ति सति भागस्य 'भागार्द्धे' भागस्य यो भागस्तस्यार्द्धं तत् 'निर-ञ्जनं' शुद्धं ब्रह्म ज्ञेयं, सर्वपरिमाणानाश्रयत्वेऽपि दुर्लक्ष्य-

सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः ॥१०॥
अतसी-पुष्प-सङ्काशं नाभिस्थाने प्रतिष्ठितम् ।
चतुर्भुजं महावीरं पूरकेण विचिन्तयेत् ॥ ११ ॥
कुम्भकेन हृदि स्थाने चिन्तयेत् कमलासनम् ।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥ १२ ॥
रेचकेन तु विद्यात्मा ललाटस्थं त्रिलोचनम् ।

---

मात्र न पारमार्थिकी। ननु छाया यथा वृक्षातिरिक्ता भव त्येव जगत् ब्रह्मातिरिक्तं चेद्द्वैतापत्तिरित्यत आह। सकल इति। यथार्थे चायथार्थे च।

इदानीं गुरूपदेशेनाज्ञानतिमिरापह साकार स्वरूप ध्येय मित्याह, अतसीति। पूरकेणोपलक्षित पूरककाल इति यावत्, षोडशभि प्रणवै पूरयन्नुकारमूर्त्तिं विष्णुं नाभौ स्मरेदिति ज्ञेयम् ॥ पितामह 'रक्तगौराङ्गं' कपिलवर्णं हृदि स्थाने कुम्भकेन विचिन्तयेदित्यन्वय । अत्रापि चतुष्षष्टिभि कुम्भयन्नकारात्मकं चिन्तयेदिति ज्ञेयम ॥ रेचकेनोपलक्षित 'त्रिलोचनं चिन्तयेत्' मकारमूर्त्तिं ध्यायेत्। द्वात्रिंशद्भीरे चयेदिति ज्ञेयम्। तदुक्तं याज्ञवल्क्येन।

"वर्णत्रयात्मका ह्येते रेचक पूरक कुम्भका ।
स एष प्रणव प्रोक्त प्राणायामस्य तन्मय " ॥ इति ॥

तत्र पूरक कुम्भक रेचका अकारोकार मकारा ब्रह्म विष्णु रुद्रात्मका ध्येयत्वेनोक्ता । अत्र तु ब्रह्म विष्णु रुद्रा इति ब्रह्मणो हृदि ध्यानमुक्तम्, अन्यत्र तु स्वाधिष्ठान उक्त, न च एवं नस्य पर्य्यनुयोगोऽस्ति। 'विद्यात्मा' विद्यात्मान, व्यत्ययेन प्रथमा, अथवा कर्तृविशेषण विद्यावान् साधक इत्यर्थ ॥

तत्रार्क-चन्द्र-वह्नीनामुपर्य्युपरि चिन्तयेत् ॥१५॥
पद्मस्योत्थापनं कृत्वा बोद्धुं चन्द्राग्नि-सूर्य्ययोः ।

---

कङ्कालकमलचक्रं विख्यातं पुटभेदनम् ॥
महापद्मि त्रिराकाच मध्ये ज्वलन सन्निभम् ।
चमाहतं यत्र पुटं व्योमचक्रं तथा भवेत् ॥
शोधनं भुवसञ्ज्ञञ्च कालाकन्दलकं ततः ।
क्रोधभैरवखण्डविभवं डामरं कुलपीठकम् ॥
कुलकोलाहलं हालावर्त्तं चैव महत्त्रयम् ।
घोराभैरव मञ्ज्ञञ्च विशुद्धिः कण्ठमुत्तमम् ॥
पूर्णकं पदमाख्यातमाज्ञाकाकपुटं तथा ।
शृङ्गाटं कामरूपाख्यं पूर्णगिर्य्यात्मकं परम् ॥
महाव्योमात्मकं चक्रं शक्तिरूपमनुस्मरेत्" ॥ इति ।

तदेव मूर्ध्नि शतपत्राम्बुजं वर्त्तते इति शेषः; इदं सहस्रपत्रमित्याहुः। इदमम्बुजमेव सुषुम्णाख्यैकनालता-दैकत्वेन विवक्षितमिति विशेषणविशेष्यभावः। कीदृश ? विप्रकीर्णाब्जकर्णिकं 'विप्रकीर्णानि' विकसितानि पद्मानि पूर्वोक्तान्याधारादीनि यथा तत्कर्णिकायां यस्य तत्तथा नाना-कमलमित्यर्थः। तत्र प्रत्येककमलं चन्द्र-वह्नीनां मूर्त्तिरेकैको-परि ध्यायेत्। तदुक्तं "तस्मिन् सूर्य्येन्दुपावकम्" इति। 'उत्थापनम्' ऊर्द्धमुखत्वम्। यद्यपि शरीरावयवोऽन्यथाकर्तुं न शक्यते विनाशप्रसङ्गात्, तथाप्यधोमुखत्वमधर्मोन्मुखता, ऊर्द्धमुखत्वमात्मिकत्वेनोर्द्ध्वलोकोन्मुखता, विचार्य्येव विभि-न्नमात्रकमन्यैवं बोध्यम्। अथवा सुषुम्णानालनलानि पद्मा-न्येव वाताहतानि ऊर्द्धमुखानि भवन्ति इति तदुत्थापनं द्रष्टव्यम्।

तैलधारमिवाच्छिन्नं दीर्घघण्टा-निनादवत् ।
अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥१८॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ १९ ॥

---

व्यवहरति शब्दव्यवहारस्य मातृकाधीनत्वात् पञ्चाशद्वर्ण-योजनाभ्यासमिति कर्णिकाविशेषणोक्तेः । तत्पदं 'त्रिस्थान' नाभिर्हृदयं मूर्धा चेति त्रीणि स्थानान्यस्य, 'त्रिमार्गस्य' स्थान भेदेनोपासनगतिभेदात्, 'त्रिब्रह्म' नाभौ विष्णुः, हृदि ब्रह्मा, मूर्धनि त्रिलोचन इति त्रीणि ब्रह्माण्यस्य, 'त्रिस्वर' त्रिवार-मच्चराख्याकारादीन्यस्य, 'त्रिमात्र' ता एव मात्राः अस्य, अकारादिषु मात्राव्यवहारात् । तदेवाग्रं तदुपर्यर्धमात्रस्य, 'य' पुमान् अकारादिवर्णान्यर्धमात्रस्य प्रणव वेद, स 'वेद-वित्' वेदोक्तं वेत्ति ।

इदानीमर्धमात्राकृत्यादिभ्यो यस्य नादस्य स्वरूप दर्शयन्नुपासने फलमाह, तैलेति । तैलस्य धारा तैलधार, छान्दसं क्लीवत्व, यथा तैलधारा अच्छिन्ना सती अविच्छेदेनानुभूयते, तथा विच्छिदा दीर्घा चानुभूयते, तद्वत् । ननु तर्हि धारा-घटेऽपि सूक्ष्मो न स्यात् ? अत उपमान्तरम् । दीर्घेति । 'अवाग्ज' वाग्व्यतिरिक्तं अथ तदनुभवात्, प्राग्वत्संस्थानम् ; अथवा न वाचो जातमवाग्जं वाचो विरामे उपलभ्यत्वात् । तथा 'प्रणवस्य अग्र' प्रणवादूर्ध्वं प्रतीयमानं 'तं नादं' 'वेद' उपास्ते 'वेदवित्' शक्तियालं अपि प्रणवरूपे ज्ञानातीत्यर्थः ॥

इदानीं शरस्य मुख इव चिपकारित्वमुपदिशन् प्रणवाभ्यासे प्रकारमाह । प्रणव इति । अयं मन्त्रो मुण्डकोपनिषदि ।

अमृतस्थानं विजानीयाद्विश्वस्यायतनं महत् ॥
विश्वस्यायतनं महदिति ॥ २३ ॥
इत्यथर्ववेदे ध्यानबिन्दूपनिषत् समाप्ता ॥ ६ ॥

---

## तेजोबिन्दूपनिषत् ।

ओं तेजोबिन्दुः परं ध्यानं विश्वातीतं हृदि स्थितम् ।
आणवं शाम्भवं शाक्तं स्थूलं सूक्ष्मं परञ्च यत् ॥ १ ॥

---

तस्यामृतस्य किं स्वरूपम् ? अत आह, विश्वस्येति । विश्वस्यायतनमित्युक्ते आकाशादि स्यात्, तदर्थमुक्तं महदिति । ब्रह्मैव निरवधिमहत्त्वाधिकरणमस्तु, तच्च भ्रूमध्ये धारणया ध्यानं सन्नह्यति, येनामृतो भवतीत्यर्थः । द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका ध्यानबिन्दुके ॥
इति ध्यानबिन्दूपनिषदो दीपिका सम्पूर्णा ॥ ६ ॥

---

ओं तेजोबिन्दुः परं ध्यानं विश्वातीतं हृदि स्थितम् ।
दिग्दण्डमेकविंशस्य तेजोमात्रफलं हि तत् ॥ १ ॥

प्रणवस्याकारोकारमकारबिन्दुनादात्मनां ध्यानं ध्यानबिन्दौ प्रोक्तम्, शक्तिशाम्भवयोर्ध्यानं वक्तुं तेजोबिन्दूपनिषदारभ्यते । तेजसा तेजः सम्, तिमिरे प्रभायां सत्, तत्र निर्गते सत्, तच्च 'बिन्दु' कला एव विधं परं ध्यानं भवति, विश्वातीत

परं गुह्यमिदं स्थानमव्यक्तं ब्रह्म निराश्रयम् ।
व्योमरूपं कलासूक्ष्मं विष्णोस्तत् परमम्पदम् ॥५॥
त्र्यम्बकं त्रिगुणं स्थानं त्रिधातुं रूपवर्जितम् ।
निश्चलं निर्विकल्पञ्च निराधारं निराश्रयम् ॥ ६ ॥
उपाधिरहितं स्थानं वाङ्मनोऽतीतगोचरम् ।
स्वभाव-भावनाग्राह्यं सङ्घातैकपदोज्झितम् ॥७॥१
आनन्दं नन्दनातीतं दुष्प्रेक्ष्यमजममव्ययम् ।

---

द्वाराख्येतद्धाने 'बिन्दुमि' प्राप्नुवन्ति साधवः ; तेन हंसस्त्रि-धामा उच्यते, त्रीणि 'धामानि' मात्रापादा यस्य, जाग्रदादीनि वा ।

ध्यानं प्रयत्नाधिकारिणश्चोक्त्वा ध्येयस्वरूपमाह, पर-मिति । 'गुह्यं' गुहामर्हति स्थानेषु 'अव्यक्तं' सर्वजनामविज्ञेयं ब्रह्म बृहत्त्वात् निराश्रयं सर्वाधारत्वात् कलासाम्यं विष्णोः सत्त्वोपाधिः परमं पदं विश्रान्तिभूमिः ।

हरिहरसाधारणं स्वरूपं ध्येयमुक्त्वा हरस्वरूपमाह, 'त्र्यम्बकं' त्रयाणां वेदानामम्बको यस्मात् त्र्यम्बकः, त्रयाणां लोकानां गन्ता, अम्बगतौ अवि च शब्दे इति धातुभ्यां ण्वुल् ; 'त्रिगुणं' सत्त्वादि गुणत्रयोपेतं, 'स्थानम्' आश्रयं, 'त्रिधातु' त्रया लोका धातवो यस्य, अन्यदपि त्रयात्मकं सर्वमस्यैव धातव, 'वाङ्मनोऽतीतगोचरं' वाङ्मनसयोरतीतो गोचरः स्थानं यस्य तत्तथा । स्वभावेति छविसमंस्कारत्यागेन स्वस्वभावियमस्तु भावनया ग्राह्यं 'सङ्घातैकपदोज्झितं' सङ्घातयाचिना पदेन उज्झितं शब्दातीतत्वात्, 'आनन्दं' स्वयमानन्दरूपं, 'नन्दनम्'

चित्तवृत्ति-विनिर्मुक्तं शाश्वतं ध्रुवमच्युतम् ॥ ८ ॥
तद्ब्रह्माख्यं तदध्यात्मं तन्निष्ठा तत्परायणम् ।
अचिन्त्यचितमात्मानं तद्व्योम परमं स्थितम् ॥ ९ ॥
अशून्यं शून्यभावञ्च शून्यातीतमवस्थितम् ।
न ध्यानं न च वा ध्याता न ध्येयो ध्येय एव च ॥१०
सर्वञ्च परमं शून्यं न परं परमात् परम् ।
अचिन्त्यमप्रबुद्धञ्च न च सत्यं न संविदुः ॥ ११ ॥

---

अन्यक्षतानन्द तदतीतमन्येनाख्यानन्द आर्तुं न शक्यते, 'चित्तवृत्ति विनिर्मुक्तं' विकारातीतत्वात्, तत् 'ब्रह्माख्य' लिङ्ग-विभक्तिव्यत्यय, ब्रह्मेत्यर्थः। 'तदध्यात्मं' तदेवाध्यात्ममात्मार्थं, 'तन्निष्ठा' तदेव निष्ठा मर्यादा, तदुक्तम्, "अत परतर नान्यत्" इति। 'तत्परायणं' परमयनं, तदुक्तं, "सा काष्ठा सा परा गति" इति। 'अचिन्त्य' चिन्तारहित चित ज्ञान यस्य ताहृश, 'आत्मानम्' आत्मरूप 'परम व्योम' परमाकाश 'स्थितं' सर्वकार्येषु तत्परम् गतासीनम् अवस्थवत्। 'अशून्ये' पूर्णे अस्मिन् सति 'शून्यभाव' शून्यत्वेन भाव्यमान जडे, वस्तुत शून्यातीतमवस्थित पूर्णत्वात्। 'अध्यानम्' इति क्रियाकारकाभावशून्यम् अत्र च 'ध्येय एव' ध्यातव्य एव ममा रिणां सुखिदत्वात्, तदप्यत्र 'सर्वं' सर्वात्मकम् अथ च 'परम शून्यम्' अमङ्गत्वात्, 'अपरं' न परं यस्मात्तत्, निषेधार्थेन नकारेण बहुव्रीहि, 'परमात्' अपि आकाशादे परम् "अत परतर नान्यत्" इति श्रुते। 'अप्रबुद्धम्' ज्ञापद्ध्या पाररहितं तथात्वं न संविदुरिति न अपि तु सत्यं विदन्त्येव.

मुनीनां तत्त्वयुक्तन्तु न देवा न परं विदुः ।
लोभं मोहं भयं दर्पं कामं क्रोधञ्च किल्बिषम् ॥१२
शीतोष्णं क्षुत्पिपासञ्च सङ्कल्पञ्च विकल्पकम् ।
न ब्रह्म कुलदर्पञ्च न मुक्तिग्रन्थसञ्चयम् ॥ १३ ॥
न भयं सुख-दुःखञ्च तथा मानापमानयोः ।
एतद्भाव-विनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परम् ।
तद्ग्राह्यं ब्रह्म तत्परमिति ॥ १४ ॥ २ ॥

इत्यथर्ववेदे तेजोबिन्दूपनिषत् समाप्ता ॥ ७ ॥

---

'मुनीनाम्' ऋषीणां तत्त्वभावेन 'युक्तम्' आदरणीयं, न देवा इति, देवाः परं न विदुरिति न अपि तु विदुरेव ।

साधनानि पूर्वमुक्तानि, सम्प्रत्यसाधनान्याह, लोभमिति । लोभं त्यक्ता न विदुरित्यन्वयः । शीतोष्णं त्यक्ताः कातराः, भयं ब्रह्मकुले जाता इति दर्पं त्यक्ता न विदुः, मुक्तिग्रन्थानां 'सञ्चयं' समूहं श्रोतारो न विदुः । न भयमिति । पुनर्भयप्रदत्व लोकलज्जाभयवन्तोऽपि न विदुरित्येवमर्थम् । मानापमानयोर्वर्तमाना न विदुः । एतदिति, एतैर्भावैः 'विनिर्मुक्तं' रहितं प्रति तद्ब्रह्म ग्राह्यं, एतद्भावसहितं लोभादिसहितं प्रति तत् ब्रह्म न ग्राह्यमित्यर्थः । 'तत्परं' तच्च ब्रह्म परमुत्कृष्टं यस्य तत्परं ब्रह्मनिष्ठम् । तद्ग्राह्यमिति द्विरुक्तिरादरार्था । इति ग्रन्थः समाप्तः ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका तेजोबिन्दुके ॥
इति तेजोबिन्दूपनिषद्दीपिका सम्पूर्णा ॥ ० ॥

ओं योगशिखां प्रवक्ष्यामि सर्वज्ञानेषु चोत्तमाम् ।
यदा तु ध्यायते मन्त्रं गात्रकम्पोऽभिजायते ॥ १ ॥
आसनं पद्मकं बद्ध्वा यच्चान्यदपि रोचते ।
कुर्यान्नासाग्रदृष्टिञ्च हस्तौ पादौ च संयुतौ ॥ २ ॥
मनः सर्वत्र संयम्य ओङ्कारं तत्र चिन्तयेत् ।
ध्यायेत सततं प्राज्ञो हृत्कृत्वा परमेष्ठिनम् ॥ ३ ॥
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ।
ईदृशे तु शरीरे वा मतिमानुपलक्षयेत् ॥ ४ ॥

---

योगमूर्धप्रतिष्ठेयमुक्ता, योगशिखा ततः ।
शिखण्डा यन्त्रमन्त्रोक्ते द्वात्रिंशतितमी मता ॥ १ ॥
यद्वा मङ्गिशिखा ध्यानयोगाद्योगशिखा मता ।
साङ्गोपाङ्गो योगयुक्तस्तया तत् साधयामि च ॥ २ ॥

समष्टि देहान्ते योगिनो गमनप्रकारो वक्तव्य, एतदर्थं योगशिखारभ्यते । योगशिखामिति । 'मन्त्रं प्रणवं 'गात्रकम्प' महातिशय सूचक यद्वा "कम्पो भवति मध्यमः" इति वचनाद्यदा मध्यमः प्राणविजयो भवति तदा पद्मासनं बद्ध्वा 'यच्चान्यत्' सिद्धादि, प्रयतो कुर्यात् सर्वत्र वर्तमानं मनः हृदि निरोध्य, यत् हृदि 'परमेष्ठिनं' कमलासनं "परमेष्ठी पितामह" इति कोशात्, एकमूर्तित्वाद्धरिहरवत् परमेष्ठिध्यानमपि मुक्तिहेतु अग्निर्वा परमेष्ठी, 'एकस्तम्भ' सुषुम्नाख्यया सुषुम्नाधारदण्डः कोडाख्यो यस्य तत् तस्मिन्, इडा पिङ्गला सुषुम्नाख्यास्तिस्रः स्थूणा यस्मिन् त्रिस्थूणे त्रिगुणात्मके वा

आदित्यमण्डलं दिव्यं रश्मिज्वाला-समाकुलम् ।
तस्य मध्यगतो वह्निः प्रज्वलेद्दीपवर्त्तिवत् ॥५॥१॥
दीपशिखायां या मात्रा सा मात्रा परमेष्ठिन ।

---

पञ्च इन्द्रियाधिष्ठात्र्यो देवता एव 'दैवतानि' प्राणादयो वा यत्र तस्मिन् पञ्चदैवते, शरीरे वेति ध्यानापेक्षो विकल्प ।

इदि ध्यानप्रकारमाह, आदित्येति । दिव्यमादित्यमण्डल 'रश्मीना' किरणाना ज्वालाभि समाकुलम् ; अनेन चन्द्रो ग्युक्तो द्रष्टव्य , "तस्मिन् सूर्येन्दुपावकान्" इत्युक्तत्वात् । वह्नि मेव ध्येयतया निर्दिशति । तस्येति । 'तस्य' आदित्यस्य मध्ये 'गत ' प्रविष्टो वह्नि दीपवर्त्तिवत् 'प्रज्वलेत्' प्रज्वलति, 'मात्रा' परिमाण, सा 'परमेष्ठिनो' ब्रह्मणो यद्वेर्वा देहाधि ष्ठातुर्भोक्ता , इद पद्मध्यान याज्ञवल्क्योऽप्योक्त, तथथा ।

"हृत्सरोरुहमध्येऽस्मिन् प्रकृत्यात्मककर्णिके ।
अष्टैश्वर्यदलोपेते विकारमयकेसरे ॥
ज्ञाननाले बृहत्कन्दे प्राणायामप्रबोधिते ।
विश्वार्चिषं महावह्निं ज्वलन्त विश्वतो मुखम् ॥
वैश्वानर जगद्योनि शिखा तद्वीजमोऽक्षरम् ।
तापयन्त स्वकन्देहमापादतल मस्तकाम् ॥
निर्वातदीपवत्तस्मिन् दीपित हव्यवाहनम् ।
दृष्टा तस्य शिखामध्ये परमात्मानमक्षरम् ॥
नील तोयद मध्यस्थ विद्युल्लेखेव भासते ।
नीवारशूकवद्रूप पीताभ सर्वकारणम् ॥
ज्ञात्वा वैश्वानरं देवं सोऽहमस्मीति या मति ।
सगुणोपासनमिदं तद्धाम योगविदो विदु ॥
वैश्वानरत्व सम्प्राप्य मुक्तिं तेनैव गच्छति" ॥ इति ।

भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः ॥६॥
द्वितीयं सुषुम्नाद्वारं परिशुद्धं विसर्पति ।
कपालसम्पुटं भित्त्वा ततः पश्यति तत्परम् ॥७॥
अथ नाध्याययेज्जन्तुरालस्याच्च प्रमादतः ।
यदि त्रिकालमावर्त्तेत् स गच्छेत् परमं पदम् ॥८॥

---

इदानीमेतद्ध्यानविशुद्धात्मनः सुषुम्नापश्चिममार्गेण षट्चक्रभेदद्वारोर्द्ध्वां गतिमाह भिन्दन्तीति । 'सूर्यं' मण्डलस्थमधिदैवतमादित्यञ्च भिन्दन्ति 'योगाभ्यासेन' उपायेन ।

भेदने उपायमाह, द्वितीयमिति । सुषुम्नायाः 'द्वितीयं' पश्चिमं 'परिशुद्धं' निर्गुणं 'विसर्पति' प्रविशति, अत्र प्रवेशोऽपि योऽमृतबिन्द्वाख्यः, द्वितीयमिति वचनात् सुषुम्नायां द्वौ मार्गाविति लभ्यते, पूर्वमार्गः पश्चिममार्गश्च, तत्र पूर्वमार्गः प्रवृत्तिविषयः, पश्चिमो निवृत्तिविषयः ; अत एव परिगृह्य उक्तञ्च स्वात्मारामेण, "पूरयेत्सावृत्त दिव्य सुषुम्नापश्चिमे मुखे" इति । पश्चिममुखस्य योगमार्गत्वात् पूर्वमुखं काममार्गं, कपालसम्पुटं 'भित्त्वा' विदार्य अध्यात्मं शिरोऽस्थि अधिदैवतं ब्रह्माण्डोर्द्ध्वकटाहं 'ततः' तदनन्तरं 'तत्परं पदं' 'पश्यन्ति' साक्षात्कुर्वन्ति, तदुक्तं हैमवर्ष्याम् ।

"मनसा सह वागीशं भित्त्वा ब्रह्मार्गलं बलात् ।
परामृतमहाम्भोधौ विश्रान्तिं तत्र कारयेत्" ॥ इति ।

उक्तयोगासमर्थं प्रति सुगमोपायमाह, अथेति । 'अथ शब्दः' पक्षान्तरे 'न ध्यायेत' न ध्यानं कुर्यात्, 'जन्तुः' देही 'आलस्यात्' अलसत्वात् प्रमादतो वा यदि न ध्यानं कुर्यात् तर्हि यदि 'एतत्' मन्त्ररूपं 'त्रिकालं' त्रिसन्ध्यम् 'आवर्त्तेत्'

पुण्यमेतत् समासाद्य सङ्क्षेपात् कथितं मया ।
लब्धयोगेन बोद्धव्यं प्रसन्नं परमेष्ठिनम् ॥ ९ ॥
जन्मान्तर-सहस्रेषु यदा नाश्नाति किल्बिषम् ।
तदा पश्यन्ति योगेन संसारच्छेदनं परम् ॥
संसारच्छेदनं परमिति ॥ १० ॥ २ ॥

इत्यथर्ववेदे योगशिखोपनिषत् समाप्ता ॥ ८ ॥

---

आवर्त्तयेत् पठेत्, स परमं पदं गच्छेत् । कथितं मया इति आचार्यो जातसाक्षात्कारः शिष्यान् प्रति वदति, एतत् 'पुण्यं' पवित्रं योगतत्त्वं मया 'सङ्क्षेपात्' अविस्तरेण कथितं भवद्भिर्बोद्धव्यम्, कथम्भूतेन मया ? प्रसन्नं 'परमेष्ठिनं' ब्रह्माणं 'समासाद्य' प्राप्य 'लब्धयोगेन' ब्रह्मणः सकाशात् मया योगो लब्धः, इति अर्थवाक्यम् ।

अस्य योगस्य दुष्प्रापतां व्याजमनायाह, जन्मेति । जन्मान्तरसहस्रेषु तपांसि चरतः पुंसो यदा किल्बिषं 'नाश्नाति' न भक्षयति न वसति तदा योगेन परं 'संसारच्छेदनं' ब्रह्म पश्यन्ति, तदुक्तम्,

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" ॥ इति ।

द्विरुक्तिः समाप्त्यर्था, इति शब्दश्च ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका योगशैखिकी ॥

इति योगशिखोपनिषदो दीपिका सम्पूर्णा ॥ ८ ॥

श्रीं योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥
विष्णुर्नाम महायोगी महाकायो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तम ॥ २ ॥
यः स्तन्यं पूर्वं पीत्वापि निष्पीड्य च पयोधरान् ।
यस्मिन् जाते भगे पूर्वं तस्मिन्नेव भगे रमेत् ॥३॥

---

श्रीं योगिनां मुक्तिकामानां मुक्तिमार्गप्रदर्शिका ।
वयोविद्या तूपनिषद्योगतत्त्वं निरूप्यते ॥ १ ॥

ग्रन्थस्य तावत् फलमाह, यच्छ्रुत्वेति । मङ्गलार्थं योगसिद्धये च परमदेवतां स्तौति, विष्णुरिति । 'महाकाय' यद्देहे ब्रह्माण्डकोटयो वसन्ति । 'तत्त्वमार्गे' परमार्थदृष्टिमार्गे, यथा दीपः प्रकाशकः, तथा विष्णुर्दृश्यत इत्यन्वयः । 'पुरुषोत्तम', तदुक्तम्,

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥ इति ।

योगप्रवृत्त्यर्थं वैराग्यं तावदाह, य स्तन्यमिति । 'यः' विवेकी स्तनेषु भवं 'स्तन्यं' दुग्धं, शरीरावयवात् यत् 'पूर्वं' बाल्यदशायां पीत्वापि पयोधरान् निष्पीड्य रमेत्, यास्ता हि धयन्तो मातुः पयोधरौ मर्दयन्ति । पश्चात्, यस्मिन् यस्मिन् पूर्वं भगे जातः 'तस्मिन्नेव' तज्जातीये एव भगे 'रमेत्' रमेत, अत्रापि निष्पीड्य च पयोधरानिति सम्बध्यते, स

या माता सा पुनर्भार्य्या या भार्य्या जननी हि सा।
यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता॥४॥
एवं संसारचक्रेण कूपचक्रे घटा इव।
भ्रमन्तो यानि जन्मानि श्रुत्वा लोकान् समश्नुते॥५॥
त्रयो लोकास्त्रयो वेदास्त्रयः सन्ध्यास्त्रयः सुराः।
त्रयोऽग्नयो गुणास्त्रीणि स्थिताः सर्वे त्रयाक्षरे॥६॥
त्रयाणामक्षरे प्राप्ते योऽधीतेऽप्यर्द्धमक्षरम्।

---

काय पर पश्येदिति शेष। योषिदासक्तचित्ताना मोक्ष गामिना ज्ञानलेशोऽपि दुर्लभ इति भाव।

सासारिक धर्म व्यवहारोऽपि सिकतासेतुप्राय इत्याह, या इति। जन्मान्तरे इति भाव। एवमिति। 'एवम् उक्तेन प्रकारेण 'ससारस्य भ्रमण 'चक्रेण' हस्तिरज्जुना 'कूप चक्रम्' 'यन्त्रम्' घरघट्टाख्य, तस्य 'घटा' यथा इव, ते यथा उपरिस्था अधोयान्ति, अधस्थायोपरि, तद्वत् भ्रमन्तो जीवा 'यानि जन्मानि' पूर्वोक्तानि, तानि यान्ति इति शेष। तानि श्रुत्वा लोकान् पितृलोक देवलोकादीन् पुण्योदयेन 'समश्नुते' प्राप्नोति इति श्रवणफलम्।

इदानीमेतत् ससारतरणोपाय प्रणवाक्षरोपासनमाह त्रय इति। अकारादीना क्रमेण पृथिव्यन्तरिक्ष द्यौरिति त्रयो लोका, 'वेदा' ऋग्यजु सामानि, 'त्रय सन्ध्या' तिस्र सन्ध्या इत्यर्थ, त्रय 'सुरा' ब्रह्म विष्णु रुद्रा ब्रह्म रुद्र विष्णवो वा, त्रय 'अग्नय' गार्हपत्य दक्षिणाग्न्याहवनीया, 'गुणा स्त्रीणि' गुणास्त्रय इत्यर्थ, सत्त्व रजस्तमांसि, 'त्रयाक्षरे' त्रया

संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति, त्रि कृत्वोक्त्वा वैणवं दण्डं कौपीनञ्च परिग्रहेत्। औषधवदशनमाचरेदौषधवदशनमाचरेत्। अभयं सर्वभूतेभ्यो मत्त इति ब्रूयात्। सर्वं प्रवर्त्तते मत्तः। सखासि मा गोपाय, ओजः सखासि, इन्द्रस्य वज्र इति। ब्रह्मचर्य्यमहिंसाञ्चापरि-

---

इदानीं सूत्रत्यागार्थं सन्न्यासमैषामाह, संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति। त्रि कृत्वेति पाठेनैव त्रित्वे सर्वं त्रिरितिवचनं यथाषामपि त्रिपाठार्थं तथा यथाम्नाय, एते त्रयोऽपि प्रैषा सन्याहृतिकास्त्रिभिर्मन्द मध्यमोत्तम स्वरैरुच्चारणीया, लोकत्रयं श्रावयितुं त्रिरभिधानं प्रैषोच्चारणेन यस्य तत्पुनरभिमन्त्रणं वध्यो मिन्द्यो वध्यश्चेति बोधयितुं सम्यक्' अपुनरादेयतया न्यस्तं संन्यस्त मित्यर्थं। प्रैषानन्तरं 'मत्त कृतप्रैषात् सर्वभूतेभ्योऽभयमस्तु। कुतोऽभयं दत्तमित्यत आह, सर्वं प्रवर्त्तते मत्त इति। मत्त एव ब्रह्मणो यत सर्वं प्रवर्त्तते, न हि जनयितुरेव भयं युक्तम् इति भाव।

इदानीं दण्डादाने मन्त्रमाह। सखेति। त्वं 'सखा अवन्धकोऽसि 'मा' मां गोसर्पादिभ्यो गोपाय, ओजो नाम शुक्रस्य परिणामो धातूनामष्टमी दशा तत्फलं तेजः शरीरं यासि, सखेति यत् त्वं सखा इष्टे कार्येऽपि 'असि' भवसि, 'इन्द्रस्य परमेश्वरस्य 'वज्र' परिभयङ्करोऽसि एतावत् प्रतीकं मन्त्रस्य शाखान्तरे सम्पूर्णं पठितम्। 'इन्द्रस्य वज्रोऽसिवार्त्रघ्नः

ग्रहञ्च सत्यञ्च यत्नेन हे रक्षत, हे रक्षत, हे रक्षत ॥ ३ ॥

अथातः परमहंस परिव्राजकानामासन-शय-

---

नार्थे मे अत्र यत्पात्र तन्निवारय इति' इतिशब्द दण्डस्य यत्नो ऽस्तित्विति मन्त्र प्रतीकार्थं । त्रि कृत्वोऽर्ह्वं वैणवं दण्डमित्यनेन सम्बन्ध वैणव दण्डम् 'ऊर्द्ध्वम्' उपरि दक्षिणकरे निधायेत्यर्थं, अत एव सन्न्यासोपनिषद्युक्तं गोपायुरिति दण्डविशेषणम्, कौपीन लज्जाढ्कत्वात्, कूप प्रवेशनमर्हति कौपीनं पुल्लिङ्ग, तन्मात्राच्छादकत्वाद् यतिवासोऽपि कौपीन शालीने अधृष्टा कार्य्ययोरिति साधु, तदपि परिगृह्णीत्। औषधवत् प्रीति विना शरीरस्थित्यर्थम् 'अशन' भोजनमाचरेत्, अभ्यासस्त्वा दरार्थं, सर्वथा रसासक्ति न कुर्य्यात्, त्यागवैराग्यादित्या दर ॥ २ ॥

इदानीं यदभावे महापातकित्वम् पातित्य, तानि पञ्च यत्नमान्याह, ब्रह्मचर्य्यमिति। युवतीनां स्मरण कीर्त्तन केलि प्रेक्षण गुह्यभाषण सङ्कल्पाध्यवसाय क्रिया निर्वृत्ति वर्जनं ब्रह्म चर्य्यम, अहिंसा च मनो वाक् काय कर्मभिर्भूतानिष्टवर्ज नम, 'अपरिग्रहम्' उक्तपरिग्रह व्यतिरिक्तवर्जनम्, सत्य प्रियहितप्रमाण दृष्टार्थवचनम्, द्वौ चकारावुक्त समुच्चयार्थौ, तृतीयोऽनुक्तास्तेय समुच्चयार्थं, एतानि पञ्च यत्नेन हे यतयो रक्षत रक्षत पुनरेव द्वयो गु तृतीये पर्य्याये हे रक्षतेति स्तुतिकृत्ये ग्रन्थार्थः, सर्वाङ्गुष्ठे आश्रयानि प्रजापालि विरक्ति शादरार्थाः, प्राणात्ययेऽप्येतानि न परित्याज्यानीति, इति शब्द उपदेशसमाप्त्यर्थं, हे शब्द उन्मुखाभिमुखीकरणे, हे मुमुक्षवो ब्रह्मचर्य्यादीनि रक्षत पाल्यकत्वाघ्नमित्यर्थं ।

नाभ्यां भूमौ। ब्रह्मचारिणां स्वपात्रं वालावु-
पात्रं दारुपात्रं वा। काम क्रोध-लोभ मोह-

---

इदानीं ब्रह्मचर्य्यादि पञ्चकर्त्तव्य्यादि परमहंसधर्मं पुन विशेषेणाह, अथात परमहंस परिव्राजकानामिति। धर्मा वक्ष्यन्त इति शेष। 'अथ' शब्दोच्चारण दण्डग्रहणानन्तर यतो ब्रह्मचर्य्यादिरक्षण विना न सिद्धिरतो धर्मा वक्ष्यन्ते, केषां? 'पर' केवलम् ब्रह्म स न ततोऽन्योऽहमिति निश्चिता परम हंसा, परिव्रजन्ति स्वदेहबन्ध परित्यज्य परिव्राजका, ते च ते च तेषाम्, आसन शयनाभ्यां भूमाविति, भूमावेवासनेन दिवा, शयनेन रात्रौ काल नयेदिति शेष, 'आसन' स्वरूपावस्थान, 'शयन' बाह्यविषय विस्मृति, तदुक्त,

"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने" इति। तेन पर्य्यङ्कादि परित्यागेऽपि स्वरूपविस्मृतौ विषयचिन्तनन चासनार्थं एवेति भाव। ब्रह्मचारिणामिति। तेषामेव विशेषणम् उपलक्षणमेतत्, अहिंसासत्यास्तेयापरिग्रहवतामित्यपि ज्ञेयम्।

उदकग्रहणार्थं पात्रमाह, स्वपात्र वालाबुपात्र दारु पात्र वेति। 'अलाबु' तुम्बीफलम्, अश्मपात्रस्तु वदन्ति, पाणिपात्रश्चेति, वा शब्दोऽनास्थाया यथालाभम् तैजसानि पात्राणि स्युरिति च तत्र पुत्राभिवादिना वाद्यानि त्याज्यानि उक्तानि, येनाथ दण्डमित्यादिना बाह्यानि बाह्यानि स्वस्थस्य मनीत्यादिनान्तर बाह्यमुक्त, अथान्यान्तराणि त्याज्यान्याह, काम क्रोधेत्यादिना। 'काम' मेथुनेच्छा स्त्रियाद्यभिलाषो वा, 'क्रोध' कामाविघातेन कामाशुर दग्धनात्मक, 'लोभ' उपात्तस्यात्यागितया, 'मोह' नित्यशुचितु सुखानि

दम्भ-दर्पासूया-ममत्वाहङ्कारानृतादीन् परित्यजेत्, वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत्, द्वावेव वा चरेत् द्वावेव वा चरेदिति ॥४॥

---

शरीरे नित्यत्वधि सुखात्मबुद्धि, 'दम्भ' धर्मध्वजित्व, 'दर्प' गर्व धनाद्यभिमानेन स्वात्मन्यधिकबुद्धि, 'असूया' परोत्कर्षासहिष्णुता; 'ममत्व' परस्मिन् स्वसम्बन्धित्वबुद्धि, 'अहङ्कार' जाति गुण कर्माभिमान, 'अनृतम्' अप्रियाहितासमाण दृष्टार्थवचनम्, आदिशब्देन हर्षशोकादि द्वन्द्वानि गृह्यन्ते, कामादीनां गणाना यत्र तत्र आदिशब्देन ग्रहणमिति, तानि परित्यजेत् न पुनः स्मरेत्।

परिव्राजक सम्प्रदाया परितो भ्रमणकर्तव्ये प्राप्ते तदपवाद माह, वर्षासु ध्रुवशील इति। अनेनाऽष्टावित्युक्ते पक्षचतु पक्षे चत्वारो मासा वर्षा, तासु ध्रुव शीलमस्य, ध्रुव इवैव स्थिरे शीलमस्य कीटाकुलायां भूमौ सर्वथाटननिषेधार्थम्, शेषे ष्वष्टसु अटनमित्यनुजानाति, अष्टौ मासानेकाकी यतिश्चरेदिति।

"बहूना कलहो यस्मात् द्वयोर्वार्ता भवेदत ।
एक एव चरेद्विद्वान् कुमार्या इव कङ्कणम्" ॥ इत्युक्तेः ।

समानशीलत्वे द्वितीयमनुजानाति, द्वावेव वा चरेदिति। अध्यात्म कथारस श्रमणे तु द्वावेव मिलित्वा चरेत्। चरतामिति वक्तव्ये चरेदित्युक्तिरैकचित्ततामावेदयितुम् वा प्रश्नोऽनाख्याताम्। एकचित्तता दम्पानामपि जायते पाषण्ड वाना महाटव्यारचात्। एवकारो नियमशीलत्वाद्यस्थर्य। वाक्याभ्यास आदरार्थं ॥ ४ ॥

खलु वेदार्थं यो विद्वान् सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्, पितरं पुत्रमग्न्युपवीतं कर्म कलत्रञ्चान्यदपीह। यतयो हि भिक्षार्थं ग्रामं प्रविशन्त्युदरपात्रं पाणिपात्रं वा। ओं हि ओं हि ओं हीत्येतदुपनिषदं विन्यसेत्, खल्वेतदुप-

---

सन्न्यासे यथा आश्रमक्रमनियमो नास्ति, तथा उपनयनस्यापि नास्तीत्याह, खलु वेदार्थमित्यादिना। वेदार्थं विद्वानिति न लौकिकेति यतीनिषेध ; सोपनयनादिति सन्धिरार्षः ; 'तानि' पूर्वोक्तानि, एतानीति पाठे वक्ष्यमाणानि, प्राग्वा त्यजेदिति, यस्तु प्राग्भवीयानल्पसुकृतवशादुपनयनमन्तरेणापि कैश्चिदभियोगेन विज्ञातवेदार्थः, स उपनयनात् पूर्वमपि त्यजेत्, तथा श्रूयन्ते हि भरतैतरेयकदुर्वासोव्यासशुकादय, प्राक्त्यागपक्षे यानि बाल्येन दुस्त्यज्यानि, पितरं त्यजेत्, पुत्र यतिपिता त्यजेत्, अग्न्याद्युपवीत विषय; च शब्देन समुचित सामान्येनाह, अन्यदपीहेति। 'अन्यत्' गृहक्षेत्रादिकम्, अपिशब्दाद् यद्यस्य स्वभावप्रियं तदपि त्यजेत्।

यतेरशनपात्रनियम कर्तव्य इत्याह, यतयो हीति। विशेष विधि शेषनिषेधकम् ग्रामं प्रवेष्टव्यमिति यत्; तेन अन्यदशाम न प्रविशन्तीत्यर्थ। अन्यपात्रवहित्वापात्रं न सङ्ग्राह्यमित्याह, पात्रीति। पाणिपात्रमुदरपात्रञ्चेति कर्मधारयौ. 'पाणि' पञ्चाग्नि पाणिर्वा पात्रम्, उदरं भासाये मुख्यमारणेन पात्रं, वा शब्दोऽनास्थायाम्. तेन भूम्यादिक मपि भिक्षादौ।

अथ मन्त्रमाह ओं हीति। मन्त्रार्थस्तु 'हि' निश्चितं

निषद विद्वान् य एव वेद, पालाशं वैल्वमाश्वत्थ दण्डमजिनं मेखलां यज्ञोपवीतञ्च त्यक्त्वा शूरो य एव वेद। तद्विष्णोः परमं पदं सदा पश्यन्ति

---

सर्वम् 'ओं' परमात्मैव, विराडात्मिर्थप्रकार प्रदर्शनार्थम्, ओङ्कारस्यैव प्राधान्येऽपि द्विशब्द सन्निध्याहरणार्थं। तस्य कल्पो क्तान् न्यासानपि कुर्यादित्याह, एतदुपनिषद विन्यसेदिति। उपनिषद शब्दोऽकारान्तो नपुंसकम, यद्वा एषा चासावुप निषद्य ता रहस्यज्ञानमुपनिषत् उपचारात् सर्वोऽपि। न्यास प्रकारस्तु प्रणवकल्पादवसेय।

उपासनफलमाह, विद्वान् य एवमिति। ब्रह्मचर्य्यादि भिर्य 'एव' एतद्गुणकमोङ्कार शब्दतोऽर्थतश्च वेद विदित्वा चाभ्यस्यति, स विद्वान् भवति, यद्वाऽऽत्म ब्रह्म साक्षात् करोतीत्यर्थः।

इदानीं ब्रह्मचारिणा सन्यासे कर्त्तव्ये पूर्वदण्डेनैव दण्डि त्वनिरासार्थमाह, पालाशमित्यादि। अत्र दण्डस्य पलाशादि प्रकृतित्वय त्रैवर्णिकाभिप्राय, द्वयोरनधिकारेऽपि ब्राह्मण स्यैव पूर्वलाभे उत्तरग्रहण सूचनार्थम्।

"सन्यासो ब्राह्मणस्योक्तो नान्यवर्णस्य कस्यचित्" इति स्मृते।

अजिन मेखलयो पूर्वमनुक्तत्वादुपादानम्। उपवीतस्य दण्डवन्धनभ्रान्ति निरासार्थं यज्ञोपवीतञ्चत्युक्तम्, चकारो लौकि काग्नि समिदासादीना समुच्चयार्थं, त्यक्त्वा' परित्यज्य शूर अन्यथानधिकारं भवेदिति शेष, न हि त्यागमात्रेण किन्तु शूरो मनोऽरिजये स्यात् तदुक्त,

"न हि सन्यसनादेव सिद्धिं समधिगच्छति" इति।

क शूर ? इत्यत आह, य एव वेदेति, 'य' विदित-

सूरयः दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमिति, एवं निर्वाणमनुशासनमिति, वेदानुशासनमिति, वेदानुशासनमिति ॥ ५ ॥

इत्यथर्ववेदे आरुणेयोपनिषत् समाप्ता ॥ ११ ॥

---

वेदार्थः संन्यासं तत्त्वधिकारे कर्तव्यत्वेन 'वेद' जानाति, सः 'शूरः' साधकश्रेष्ठः ।

उक्तसंन्यासफलावेदकमृग्द्वयमुदाहरति, तद्विष्णोरित्यादि । सूरयो दिव्यदृष्ट्या 'तत्' सूक्ष्मोपलभ्यं विष्णोः परमं पदं सदा पश्यन्ति । तस्य नित्यत्वात् स्वरूपे दृष्टान्तमाह दिवीति । निर्मले आकाशे 'आततं' व्याप्तं चक्षुर्यथा आवरकाभावाद्विततं निर्विकल्पकं ज्ञानं भवति, तथा विकल्पशून्यं चिद्घनं तदित्यर्थः ।

ननु कथं तदेवं लभ्यमित्याशङ्क्य गुरूपदेशादित्याह, तद्विप्रास इति । छान्दसोऽसुक्, ब्राह्मणानामेवोपदेशाधिकार इति विप्रग्रहणेन सूचितम् ; 'विपन्यवः' विमन्यवः छान्दसो वर्णव्यत्ययः, काम-क्रोधादिरहिताः, यतस्तुतो पन्युः स्तुतिः तद्रहिताः, तुल्यनिन्दास्तुतय इति वा, 'जागृवांसः' त्यक्ताज्ञाननिद्राः, तदुक्तम्,

"या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी" इति ।

'समिन्धते' सम्यक् दीपयन्ति परहिताय प्रकाशयन्ति ; किं तत् ? यद्विष्णोः परमं 'पदं' पदनीयं सूक्ष्मोपलभ्यं स्थानं स्वरूपात्मकमेव, विप्रोपदेशादेव तल्लभ्यमितिभावः । इति शब्दो मन्त्रद्वयसमाप्त्यर्थः ।

**ओं ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमाम् ।**
**यत्रोत्पत्तिं लयञ्चैव ब्रह्म-विष्णु महेश्वरात् ॥ १ ॥**

---

उपसंहरति, एष निर्वाणेति वाक्यैर्भवेन्न, निर्वाणोऽवाप्ते इति मिथ्यामत, 'निर्वाणम्' उपशान्तिर्मोक्ष इति यावत्, तथानुशासनमेवं द्रष्टव्यम् । ननु किमिदं प्रजापतेरनुशासनम् ? ओमिति चेत्, तथा सति पौरुषेयत्वेनाप्रामाण्यं प्रसज्येत स्यादित्यत आह वेदानुशासनमिति । आदर्शप्राजापत्या ख्यायिका तु विद्या स्तुत्यर्थैव 'वेदस्य' शब्दराशेः सर्वज्ञस्य सर्ववर्णाश्रमादिव्यवस्थाहेतोः राजकल्पस्यानुशासनं, तदकरणे संसारशूले तस्करादेरिव विनिक्षेप स्यात् । अथवास्यैषा अपि वेदानामेतावदर्थं पर्यवसायित्वमित्येतदर्थं । इति शब्द उपनिषत्समाप्त्यर्थं ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद वाक्यानामारुण्येय प्रदीपिका ॥
इत्यारुण्येयोपनिषदो दीपिका सम्पूर्णा ॥ ११ ॥

---

ओं ब्रह्मविद्योपनिषदि त्रिखण्डायां त्रिदेवता ।
त्रिस्युत्पत्ति तया प्रोक्ता प्रणवस्याक्षरत्रयात् ॥ १ ॥

ब्रह्म प्रणवस्त्रिमात्राभेदेनोपास्यत्वेनोपदिष्टम्, तस्यावयवम् शरीरं वर्णं स्थानं-तथा प्रोक्ता इति तदर्थं ब्रह्मविद्योपनिषदा रभ्यते । ब्रह्मविद्यां प्रवक्ष्यामीति श्लोक आदिदेशादौ पठ्यते । 'ब्रह्म' प्रणव तस्य 'विद्यां' ज्ञानं, तां किम्भूतां ? सर्वेषां 'ज्ञानम्' उपायभूताम्, तथा 'यत्र विद्यायां देवत्रयात् उत्पत्तिं

प्रसादान्तःसमुत्थस्य विष्णोरद्भुतकर्मणः ।
रहस्यं ब्रह्मविद्यायां ध्रुवाग्निः सम्प्रचक्षते ॥ २ ॥
ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानं कालं लयं तथा ॥३॥

---

लयं चकारात् पालनञ्च प्रवक्ष्यामीति पूर्वेणान्वयः । स्तुतौ प्रतिज्ञेयम् ॥ १ ॥

प्रसादेति । विष्णोर्ब्रह्मविद्यायां रहस्यं 'ध्रुवाग्निः' प्रणव बीज इति प्रचक्षते बुधा इत्यन्वयः । विष्णुरेव विद्या प्रवर्त्तितेत्यर्थः । कीदृशस्य ? 'प्रसादेन' भक्तकृपया 'अन्तः' अन्तरात् स्तम्भमध्यात् 'समुत्थस्य' नृसिंहरूपेण प्रकटीभूतस्य, यद्वा "प्रसादो देवभूभुजाम्" इति कोषात् क्षीरोदार्णव वैकुण्ठ बलिगृहद्वारादि प्रसादस्यान्तरात् जगद्रक्षणार्थं प्रकटीभूतस्य, यद्वा 'प्रसाद' निद्रायामिच्छया प्रसन्नरूपो जीव, तस्य 'अन्तरम्' आवरणमविद्यादि, तत 'समुत्थस्य' निष्क्रान्तस्य अविद्यावरण रहितस्येत्यर्थः ; यथोक्तं छान्दोग्ये 'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुष' इति । अद्भुतकर्मणः मत्स्यादिरूपेण, ओङ्कारः 'ध्रुव' अक्षरमित्येतदुक्तम् , तथाहि,

"ओङ्कारो वर्त्तुलस्तारो बिन्दुः अग्निरधिदेवता ।
प्रणवो मन्त्रगर्भश्च पञ्च देवा ध्रुवः शिवः ॥
मन्त्राद्यं परमं बीजं मूलमाद्यश्च तारकः ।
शिवादिर्व्यापको व्यक्तः परं ज्योतिश्च सर्ववित्" । इति ।

स्थानं कालं लयं तथेति । कालशब्दो मेयकवाचको मह्

तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नय. ।
तिस्रो मात्रार्द्धमात्रा च त्र्यक्षरस्य शिवस्य च॥ ४ ॥
ऋग्वेदो गार्हपत्यञ्च पृथिवी ब्रह्म एव च ।
अकारस्य शरीरन्तु व्याख्यातं ब्रह्मवादिभिः ॥ ५ ॥
यजुर्वेदोऽन्तरिक्षञ्च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान् देव उकारः परिकीर्त्तितः ॥ ६ ॥
सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्त्तितः ॥ ७ ॥
सूर्य्यमण्डलमिवाभात्यकारः शङ्खमध्यगः ।

---

साधयति, तेन सर्वं पश्यामीत्यर्थः । सर्वमित्येव वक्तव्ये काल ग्रहण मायारूप कालस्यापि सङ्ग्रहार्थमिति द्रष्टव्यम् ॥२॥३॥

अवयवश शरीर तावदाह, तत्र देवा इति। त्र्यक्षरस्य शिवस्य चेति, 'शिव' अर्द्धमात्रार्थं तिस्रो मात्रास्त्र्यक्षरस्य अर्द्धमात्रा शिवस्येत्यर्थं, प्रणवस्य देवादयस्त्रय उक्ता । तिस्रो मात्रा अर्द्धमात्रा चेति वक्तव्ये छान्दस सन्धि । तदुक्त शट प्रदीपिकायाम् ।

"अकारश्च उकारश्च मकारो विन्दु सज्ञक ।
त्रिधा मात्रा स्थिता यत्र तत्पर ज्योतिरोमिति" ॥ ४ ॥

त्रय इत्युक्त, तदेव विभजते, ऋग्वेद इत्यादिना। ब्रह्म एव चेत्यत्र छान्दसी ह्रस्व प्रकृतिभावश्च, ब्रह्मा देव इत्यर्थः । ॥ ५—७ ॥

अकारोऽनेन शब्देन शरीरमुक्त, सम्प्रति स्थान वर्णसहित

उकारश्चन्द्र-सङ्काशस्तस्य मध्ये व्यवस्थितः॥८॥
मकारश्चाग्नि-सङ्काशो विधूमो विद्युतोपमः।
तिस्रो मात्रास्तथा ज्ञेयाः सोम-सूर्य्याग्नि-तेजसः॥९॥
शिखाभा दीपसङ्काशा यस्मिन्नुपरि वर्त्तते।
अर्द्धमात्रा तु सा ज्ञेया प्रणवस्योपरि स्थिता॥ १०॥
पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा।

---

माह, सूर्य्येति। सूर्य्यमण्डलमिव चाभाति अकारः, 'मह' ललाटास्थि 'तन्मध्ये' नेत्रस्थानं तत्र वर्त्तमानः, योऽयं दक्षिणेऽक्षन् पुरुष इति श्रुतेः।

"शङ्खौ निम्नान्तरे कर्णु-ललाटास्थि-मध्येषु च" इति विश्वः। 'तस्य मध्ये' शङ्खस्यैव मध्ये अर्थात् वामनेत्रे स्थितः। उकार इति। अथापि तस्य मध्ये इत्यपेक्षते, शङ्खस्य मध्ये अर्थात् तृतीयनेत्रे व्यवस्थितः; अतएव याज्ञवल्क्येनोक्तम्।

"इडायां पिङ्गलायाञ्च चरतश्चन्द्र-भास्करौ।
इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः"॥ इति।

पेचर्य्याञ्च।

"जिह्वामूले स्थितो देवि! सर्वतेजोमयोऽनलः।
तदग्रे भास्करश्चन्द्रस्तालुमध्ये प्रतिष्ठितः।
एवं यो वेत्ति तत्त्वेन तस्य सिद्धिः प्रजायते"॥ इति।

'तिस्रो मात्राः' अकारादयः, अनेन आसां उक्तः, सोम सूर्य्याग्नि-तेजस इत्यनेन वर्णा उक्ताः, 'यस्मिन्' शङ्खे 'उपरि' तृतीयनेत्रादुपरि, अनेनार्द्धमात्रास्थानमुक्तम्॥ ८—१०॥

पद्मसूत्रेति। पद्मसूत्रनिभेति तस्या वर्ण उक्तः, 'शिखाभा'

सा नाडी सूर्य्यसङ्काशा सूर्य्यं भित्त्वा तथा परम्॥११॥
द्वासप्तति सहस्राणि सूर्य्यं भित्त्वा तु मूर्द्धनि।
वरद. सर्वभूतानां सर्वं व्याप्यैव तिष्ठति॥ १२ ॥

---

स्वालाभा ऊर्द्ध्वं सा वैपद्याभ्यां, तथा मूले स्थूला उपर्य्युपरि तन्वी च।

"शिखा शिखायां ज्वालायां चूडायामग्रमात्रके।
साङ्ग्व्याश्वापि शाखायां चूडायाश्च शिखण्डिन"॥
इति विश्व।

'सा नाडी सुषुम्णा, तस्या एव वा पूर्वोक्ति विशेषणानि, 'सूर्य्यं' चक्षुरधिष्ठानम्, अथवा, सूर्य्यात् लब्धरश्मित्वात्मनो ऽधिष्ठानचन्द्र सूर्य्यं, त भित्त्वा, तथापरम् अधस्कन्धे द्वास प्तति सहस्राणि नाडीभिश्चा ऊर्द्ध्वं गता, तदुक्तं गौरवेण,

"ऊर्द्ध्वं मेढ्रादधो नाभे कन्दयोनि खगाण्डवत्।
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्तति"॥ इति।

पुनरधिदैवत सूर्य्यं भित्त्वा 'मूर्द्धनि' ब्रह्मलोके द्वादशान्ते च दृश्यते इत्यनुपद्य। तदुक्तं याज्ञवल्क्येन

"तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा।
मुक्तिमार्गेति सा प्रोक्ता सुषुम्णा विश्वधारिणी॥
कन्दस्य मध्यमा गार्गि! सुषुम्णा सुप्रतिष्ठिता।
पृष्ठमध्य स्थिता नाडी सा हि मूर्द्धि व्यवस्थिता॥
मुक्तिमार्गे सुषुम्णा सा ब्रह्मरन्ध्रे प्रतिष्ठिता।
अव्यक्ता सैव विज्ञेया शुद्धा सा वैष्णवी स्मृता"॥ इति।

प्रणवो नादरूपेण सर्वव्याप्येवेत्याह वरद इत्यनेन। ओङ्कारोऽनाहतशब्दो विष्णुरेव इत्युक्तं भवति॥ ११—१२॥

कांस्यघण्टा-निनादस्तु यथा लीयति शान्तये ।
ओङ्कारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥१३॥
यस्मिन् संलीयते शब्दस्तत्परं ब्रह्म गीयते ।
ध्रुवं हि चिन्तयेद् ब्रह्म सोऽमृतत्वाय कल्पते ॥
सोऽमृतत्वाय कल्पते ॥ १४ ॥

इति ब्रह्मविद्योपनिषत् समाप्ता ॥ १२ ॥

---

इदानीं लयमाह, कांस्यघण्टेति । यथा 'लीयति' लीनो भवति उपरतव्यापारो भवति, ओङ्कारस्तथा शान्तये योज्य. युततरो जप्य इत्यर्थः । 'सर्वं' सर्वात्मभावं ब्रह्मभावमिच्छता ॥ १३ ॥

यस्मिन् 'संलीयते' यद्वस्तु अनुभूय 'शब्दः' विषयः नोपलभ्यते विलीयते, तत्परं ब्रह्म । तदुक्तं दृटप्रदीपिकायाम्,

"काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति ।
नादे प्रवर्तितं चित्तं नादेन सह लीयते ॥
विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः ।
एकीभूयाथ सहसा चिदाकाशे विलीयते" ॥ इति ।

लयलक्षणम् ।

"लयो लय इति प्राहुः, कीदृशं लयलक्षणम् ? ।
अपुनर्वासनोत्थानात् लयो विषय विस्मृतिः." ॥ इति ।

यदा यतो वाचो निवर्तन्ते इत्यर्थः ॥ १४ ॥

उपसंहरति, ध्रुवमिति । 'ध्रुवम्' ओङ्कारं हि ब्रह्म चिन्तयेत् 'ध्रुवम्' एकरूपं वा एकाग्रतया वा ब्रह्म चिन्तयेत् । द्विरुक्तिः समाप्त्यर्था ।

# क्षुरिकोपनिषत् ।

**ओं क्षुरिकां सम्प्रवक्ष्यामि धारणां योग-सिद्धये ।**
**यां प्राप्य न पुनर्जन्म योगयुक्तः स जायते ॥ १ ॥**
**वेद-तत्त्वार्थ-विहितं यथोक्तं हि स्वयम्भुवा ।**

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद व्याख्याना दीपिका ब्रह्मवेदने ॥
इति ब्रह्मविद्योपनिषदो दीपिका सम्पूर्णा ॥ १४ ॥

---

* ओं क्षुरिका शस्त्रिका प्रोक्ता तत्तुल्या धारणा यत ।
मर्माच्छेदकत्वात्सोऽयं क्षुरिकाग्रन्थ उच्यते ॥ १ ॥

गुरुत प्राप्तविद्यस्य श्रत एव लब्धज्ञान प्रणव मन्त्रस्य षडङ्गे योगेऽधिकार इति तदर्थमुत्तरो ग्रन्थ, क्षुरिकामि त्यादि । 'क्षुरिकामिव' संसारोच्छित्तये शस्त्रिकामिव रूपक, 'धारणाम्' आत्मनि चित्तावस्थानलक्षणाम्, उक्तञ्च योगि याज्ञवल्क्येन,

"शमादि गुणयुक्तस्य मनस स्थितिरात्मनि ।
धारणेत्युच्यते सद्भि शास्त्रतात्पर्य वेदिभि" ॥ इति ।

न पुनर्जन्म भवतीति शेष । 'स' धारणावान् कुत श्चिदपराधाद् यदि योगभ्रष्टो भवति, तर्हि जन्मान्तर योग युक्त एव जायते इत्यर्थ योगश्चित्तवृत्ति निरोध ।

"तत्र त बुद्धिसंयोग लभते पौर्वदेहिकम्" इति स्मृते ॥१॥

वेदेति । इदं योगस्वरूपं वेदेन 'तत्त्वार्थेन' परमार्थेन 'विहित' विधि विषयीकृत 'स्वयम्भुवा' ब्रह्मणा 'यथोक्त'

निःशब्दं देशमास्थाय तत्रासनमवस्थितः ॥ २ ॥
कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ।

---

यथा वर्त्तते तथोक्तं न विसंवादोऽत्यर्थः । तथोक्तं योगियाज्ञवल्क्येन,

"वक्ष्यामि योगसर्वस्वं ब्रह्मणा कीर्त्तितं पुरा" । इति ।
"तथोक्तं परमेष्ठिना" • • • इति च ।

योगस्वरूपं साधयितुं षडङ्गान्याह, निःशब्दमिति । यदुक्तं,

"कान्तारे विजने देशे फलमूलोदकान्विते ।
तपश्चरम् प्रसेधितव्यम् • • • इति ।

षडङ्गलक्षणान्यप्यत्र विस्तरादुक्तानि । यमादीनां पूर्वकाण्डादेव सिद्धत्वादिहानभिधानं, न तु कापालिकवदनङ्गीकारात् । यमा यथा

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश" ॥

नियमा दश यथा,—

"तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्" ॥ इति ।

'अवस्थितः' आवस्थिकः आरूढः, तदुक्तं गीतासु ।

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्" ॥ इति ।

तथा तत्त्वेष्वासनं पद्माद्यासनमित्यपि बोध्यम् । तदुक्तं हठप्रदीपिकायाम् ।

"हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते ।
तत्कुर्य्यादासनं स्थैर्य्यमारोग्यं चाङ्गलाघवम्" ॥ इति ।२।

प्राणान् सञ्चारयेद्-योगी नासाभ्यन्तरचारिणः ।
भूत्वा तत्र गतः प्राणः शनैरथ समुत्सृजेत् ॥ ५ ॥
स्थिरमात्रा दृढं कृत्वा अङ्गुष्ठे तु समाहितः ।
द्वे तु गुल्फे तु कुर्वीत जङ्घे चैव त्रयस्त्रयः ॥६॥
द्वे जानुनि तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः ।
वायोरायतनञ्चात्र नाभिदेशे समाश्रयेत् ॥ ७ ॥

---

"कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम् ।
बन्धो जालन्धराख्योऽयममृताप्ययकारकः." ॥ इति ॥३-४॥

सञ्चारयेत् पूरकमात्राभिः, तस्मिन् हृदये। नासेति। तेन सुखेन पूरक रेचकौ निषिद्धौ।

भूत्वेति। प्राणः 'तत्र' सर्वशरीरे 'गतः' प्रविष्टः भूत्वा तिष्ठतीति शेषः। एतेन कुम्भक उक्तः, स च पूरक मात्रापेक्षया चतुर्गुणाभिर्मात्राभिः कार्यः। अथ रेचकमाह, शनैरिति। समुत्सर्जनञ्च पूरणापेक्षया द्विगुणाभिर्मात्राभिः ॥५॥

स्थिरेति, 'स्थिराभिः' एकरूपाभिर्मात्राभिः 'दृढं' स्थिरं प्राणं कृत्वा, केवलकुम्भकः सिद्ध इत्यर्थः। ततो धारणाभिः प्रत्याहारमभ्यसेदित्याह, अङ्गुष्ठ इत्यादिना। अङ्गुष्ठे इत्यादौ जातावेकवचनम्, अङ्गुष्ठयोः गुल्फयोः जङ्घयोः इत्यादि बोध्यम्। अङ्गुष्ठयोर्धारणे कुर्वीतेत्यन्वयः, द्वे तु धारणे कुर्यादित्यर्थः। त्रयस्त्रय इति। धारणा मध्येषु निरोधाः कर्तव्याः इति शेषः। जानुनि पादान्तयोः ऊरुभ्याम् साधनाभ्याम् ऊर्वोरपि तथा द्वे इत्यर्थः। नाभिदेशे इति। अत्र नाभिदेशे वायोः 'आयतनं' मुख्य स्थानमस्ति। तत्र धारणया समाश्रयेदित्यर्थः ॥ ६—७ ॥

तत्र नाड़ी सुषुम्णा तु नाड़ीभिर्बहुभिर्वृता।

---

तत्रेति। 'तत्र' नाभौ 'सुषुम्णा' मध्यनाड़ी 'बहुभि' र्द्वास- प्ततिसहस्रै र्वृता; मूलन्तु तस्याः कन्दमध्ये। कन्दस्तु—

"गुद ध्वजान्तरे कन्दमुत्सेधाद् द्व्यङ्गुलं विदुः"। इति।

"गुद मेढ्रान्तरे यदे वेणुकन्दं तदुच्यते"॥ इति च।

'वेणु' सुषुम्णा, सा च षट्चक्रगता मूलाधार दण्डान्त शिखरं गता मूर्द्धानं भित्त्वा ब्रह्मलोकान्तं निर्गता। तदुक्तं छान्दोग्ये, "शतञ्चैका च हृदयस्य नाड्यः, तासां मूर्धानमभिनिःसृतैका" इति। नाभेरूर्द्ध्वन्तु चक्रानुक्रमेण धारणा मूर्द्धान्त दृष्ट्या उक्तञ्च योगियाज्ञवल्क्येन,

"मर्मस्थानानि विज्ञाय शरीरे योग क्षेमयोः।
तानि सर्वाणि वक्ष्यामि यथावच्छृणु सुव्रते॥
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्यौ तथैव च।
चित्योर्मूलञ्च जान्वोश्च मध्ये चोरुभयस्य च॥
पायुमूलं ततः पश्चाद्देहमध्यञ्च मेढ्रकम्।
नाभिश्च हृदयं गार्गि! कण्ठकूपस्तथैव च॥
तालुमूलञ्च नासाया मूलञ्चाक्ष्णोश्च मण्डले।
भ्रुवोर्मध्यं ललाटञ्च मोक्षाणि मुनिसत्तमे॥
मर्मस्थानानि चैतानि" इति।

एतेषु च तत्रैव धारणोक्ता,—

"स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत्।
स्थानात् स्थानं समाकृष्य प्रत्याहारं प्रकुर्वतः॥
सर्वे रोगाश्च नश्यन्ति योगाः सिध्यन्ति तस्य च"॥ इति।

अङ्गुष्ठादूर्ध्वमारोहे फलमिदमुक्तम्; मूर्ध्नोऽङ्गुष्ठपर्यन्तावरोहेऽपि धारणानां फलमुक्तम्,—

अणुरक्ताश्च पीताश्च कृष्णास्ताम्र-विलोहिताः ॥८॥
अतिसूक्ष्मां च तन्वीं च शुक्लां नाडीं समाश्रयेत् ।

---

"स्थानात् स्थानं समाक्रम्य यस्त्वेवं धारयेत् सुधीः ।
सर्वपापविशुद्धात्मा जीवेदाचन्द्रतारकम्" ॥ इति ।

अणुरक्ताश्चेति । अणुरक्ताश्चेत्यादि नाडीनां विशेषणम्, तदुक्तं छान्दोग्ये, "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य" इति । अणवश्च ता रक्ताश्चेति समासः ॥ ८ ॥

एवं केवलकुम्भके सिद्धे प्राणमनसोः स्थानविशेषेषु प्रत्याहारमध्यस्थ धारणासिद्धये सुषुम्नायां प्राणमनसोः प्रवेशः कर्त्तव्यः, तत्रोपायः, सत्योड्डियाणजालन्धरबन्धे शक्तिचालनेनापानमूर्द्ध्वमाकृष्य तेन देहमध्येऽग्निं प्रज्वाल्य तज्ज्वालया कुण्डलीं प्रताप्योद्बोध्य ब्रह्मनाडीद्वारमध्यस्थ तन्मुखप्रसारणेन तत्र वायुमनो वह्नीन् प्रवेशयेदित्याशयेनाह, अतिसूक्ष्मामिति । तत्र जालन्धरबन्धः उक्तः ; उड्डियाणो यथा,—

"उदरे पश्चिमं तानं नाभेरूर्द्ध्वन्तु कारयेत् ।
उड्डियाणो ह्ययं बन्धो मृत्युमातङ्गकेशरी" ॥ इति ।

मूलबन्धो यथा,—

"पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम् ।
अपानमूर्द्ध्वमाकृष्य मूलबन्धो निगद्यते" ॥ इति ।

शक्तिचालनं यथा,—

"अभ्यासनस्थस्य फणावती सा प्रातश्च सायं प्रहरार्द्धमात्रम् ।
प्रपूर्य्य सूर्य्यात् परिधानयुक्त्या प्रगृह्य नित्यं परिचालनीया" ॥ इति ।

ततः सञ्चारयेत् प्राणानूर्णनाभीव तन्तुना ॥९॥
ततो रक्तोत्पलाभासं पुरुषायतनं महत् ।
दहरं पुण्डरीकेति वेदान्तेषु निगद्यते ॥ १० ॥
तद्भित्त्वा कण्ठमायाति तां नाडीं पूरयन् यतः ।
मनसस्तु क्षुरं गृह्य सुतीक्ष्णं बुद्धिनिर्मलम् ॥ ११ ॥

---

ऊर्णनाभिः 'तन्तौ' जालायमाने मध्यस्थानं भागोपकां 'नाडीं' सुषुम्नां 'सञ्चारयेत्' अन्या नाडीरुत्सृज्य तत्रैव मनो दध्यादित्यर्थः । 'ततः' तदेत्यर्थः, यतोऽवार्यं तामि, तन्तुनेति प्रतियोगिनि यतोऽयं व्यवधानं, सुषुम्नया प्राणान् 'सञ्चारयेत्' ऊर्ध्वं नयेत् । 'ऊर्णनाभी' लूताख्यः कीट विशेष तन्तुना यथा ऊर्ध्वं सञ्चरति, तथा सञ्चारये दित्यर्थः ॥ ८ ॥

'ततः' सञ्चारणानन्तरं तद्भित्त्वेत्यपकर्षेणान्वयः, 'तत् पुण्डरीकं, कीदृशं ? रक्तोत्पलवदाभासं रक्तवर्णं भासमानं नाडी योगात् रक्तता "पुण्डरीकं सिताम्बुजे" इति कोषात् सितत्वे ऽप्यौपाधिकी ज्ञेया । 'पुरुषायतनं' जीवस्थानं 'महत्' सर्वा प्रभावकत्वात्, 'दहरं' दभ्र सूक्ष्मस्वरूपस्य ब्रह्मण दहराख्य साधनात् 'वेदान्तेषु छान्दोग्यादिषु निगद्यते' कथ्यते, तद्यथा,— "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मि-न्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासि-तव्यम्" इति ॥ १० ॥

'तत्' पुण्डरीकम् अनाहताख्यं कुण्डलिनी सह प्राणा न्भित्त्वा 'कण्ठं' विशुद्धाख्य स्थानम् अर्थात् मेरुमायाति जीव, 'तां सुषुम्नां 'पूरयन्' व्याप्नुवन् 'यतः' प्रयतः सावधान,

**पादस्योपरि समृज्य तद्रूप नाम कृन्तयेत् ।**
**मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः ॥१२॥**

'पूरयन् दिवि' इति पाठे, दिवि इति निमित्तसप्तमी, फलमपि च निमित्त भवति, दिव प्राप्त्यर्थं जह्नं मारोहेदित्यर्थः । मन प्रकृतिक सुर मास्वनिष्यात मन एवेत्यर्थ 'सुतीक्ष्ण' तर्कण घर्षणोपलेन निर्दृष्ट शानस्थानीयया बुद्धा निर्मलम् ॥ ११ ॥

पादस्येति । ब्रह्मण 'पादस्य' सुब्व्यत्ययेनास्य सुप्याद स्थानीयस्य उपरि तदुपासनाय 'समृज्य' निर्मलीकृत्य, भजे र्यन्तात् ल्यप् छान्दस । ब्रह्मण पादा यथा,—

"तदेतश्चतुष्पाद् ब्रह्म, वाक् पाद, प्राण पाद, चक्षु पाद, श्रोत्र पाद, इत्यध्यात्मम्, अथाधिदैवतम्, अग्नि पाद, वायु पाद, आदित्य पाद, दिश पाद, इत्युभयमेव आदिष्ट भवति, अध्यात्मञ्चैवाधिदैवतञ्चेति" ।

अथवा प्रणवस्य चत्वार्यक्षराण्येव आयदादि रूपाणि पादा, "ओमित्येतदक्षरस्य पादाश्चत्वार" इत्यथर्वशिखोक्ते, 'तत्' प्रसिद्ध 'रूप' भूतादिस्वरूप 'नाम' तद्वाचक शब्द, तद्य ब्रह्मणो सोमस्थानीय स्वरूपाद् बाह्य 'कृन्तयेत्' नियर्त येत तद्विषयो वृत्ति भूतशक्ति मार्गेण त्यजेदित्यर्थं । इदमेव तस्य निकृन्तन यदविषयीकरण अमोघयत्नात् संसारस्य मन मात्रपरकस्य स्वरूपाभावात्, षट्पथे उत्तरमार्गं रोधक सर्प्र न्थिनाडीचक्र छिन्द्यात्, तदुक्त,—

"नासार्द्धेण मार्गवाहि पवन प्राणातिदीर्घीकृत
स्वद्वार-परिपूरितामृततनु याम भविष्णुमाय नाड़ी ।
छिन्द्यात् काल वियालवह्नि वशतो ब्रह्मनाडीगया
स्तत् कार्यं कुरुते पुनर्नवतरं छिन्नद्रुमस्कन्धवत्" ॥ इति।

इन्द्रवज्र इव प्रोक्तो मर्म्मजङ्घानुकीर्त्तनम् ।
तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् ॥१३॥
ऊर्वोर्मध्ये तु संस्थाप्य मर्म्मप्राणविमोचनम् ।

---

किं कृत्वा निकृन्तयेत्? अत आह, मन इति। मनसा उपायेन 'निश्चयं' अभीष्टं 'योगं' जीवात्मपरमात्मनोरैक्यं, पक्षान्तरे 'योगम्' उपयोगम् आस्थित ॥ १२ ॥

कीदृशं योगम्? इन्द्रवज्र इवेति। तथा प्रोक्तः यथा इन्द्रो वज्रेण मेघं भिनत्ति एवमयं योगः छित्त्वा वासनाजालम्, 'इन्द्रवज्रं' विद्युत् तत्तुल्यया कुण्डलिन्या नाडीजालञ्च छिनत्ति। पुनः कीदृशः? मर्म्मणो जङ्घाया अनुकीर्त्तनं यस्मिन् स तं, जङ्घारूपमर्म्मध्यानस्थानं यत्र कथितम्। जङ्घाग्रहणमङ्गुष्ठादेरप्युपलक्षणं तुल्यन्यायत्वात्, अङ्गुष्ठादिमूर्द्धान्तानां मर्म्मणामनुकीर्त्तनात्। 'मर्म्मजङ्घानुकर्त्तनम्' इति पाठे, यथा नापितेन क्षुरस्य तैक्ष्ण्यार्थाय जङ्घा अनुकृत्यते सुघृष्यते तथा अङ्गुष्ठादिमर्म्मस्थानानि नाडीमण्डलानुकृन्तनेन निर्म्मलीक्रियन्ते इत्यर्थः। तदिति तच्छब्देन योग्यतावशात् मर्म्मजङ्घादि गुणीभूतमपि परामृश्यते तत् तन्नाडीकं मर्म्मादि धारणाभिश्छिन्द्यात्। अथवा व्यवहितमपि रूपं नाम तच्छब्देन परामृश्यते, स एवार्थः ॥ १३ ॥

ऊर्वोरिति। ऊरुग्रहणमुत्तरोत्तरस्थानोपलक्षणम्, ऊर्वोर्मध्ये समनस्कं प्राणं संस्थाप्य मर्म्मणि प्राणस्य च विमोचनं कर्त्तव्यम्। 'अस्मिन् मर्म्मण्यहं स्थितः' इत्यभिमानं त्यक्त्वा निरालम्बस्तिष्ठेदित्यर्थः। एवं स्थानान्तरेष्वप्यूह्यम्। अथवा

ततो विदित-चित्तस्तु निःशब्दं देशमास्थितः ।
निःसङ्गस्तत्त्व योगज्ञो निरपेक्षः शनैः शनैः ॥२१॥
पाशं छित्त्वा यथा हंसो निर्विशङ्कः खमुत्क्रमेत् ।
छिन्नपाशस्तथा जीवः संसारं तरते सदा ॥२२॥
यथा निर्वाण-काले तु दीपो दग्ध्वा लयं व्रजेत् ।
तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् २३

---

इति विपरिणाम । पुत्रादि नाशाश्रयो यथा मण्डूक भवति, तथैव नाडी यामनाश्रय इत्यर्थः । तर्हि किं कार्यम् ? अत आह, तामिति । चिन्तनफलमाह, तदिति । 'प्रपद्यन्ते' सम्पद्यन्ते ॥ १८—२० ॥

तत इति । विदित चित्तं येन स विदितचित्त । 'मात्रा-धारेण' मात्रा द्वादशादि सङ्ख्या प्रणवमात्रा, सा एव धारा यस्य मन सुरस्य स तथा । 'तन्तु' वासनारूपम् । छिनत्ति निश्चयार्थं , ममास्यं इतिशब्द । पदमारोह प्रकार उत्क्रान्तिगमये हिसरीपटने उक्त , यथा.—

"यदा तु योगिनो बुद्धिस्याद् देहनिम भवेत् ।
तदा स्थिरासनो भूत्वा मूलाग्रहति मनुष्मणाम् ॥
सूर्यकोटि प्रतीकाशा भावयेच्चिरमात्मन ।
आपादतल पर्यन्तं प्रसृत श्रीवमात्मन ॥
संहृत्य क्रमयोगेन मूलाधारपदं नयेत् ।
तत्र कुण्डलिनीं शक्तिं सर्वतत्त्व परिभवाम् ॥
जीव निजर्वेन्द्रियाणि सकलां चिन्तयेद्धिया ।
सम्भाव्य कुम्भकाभ्यां तडित्स्तत्तन भासुराम् ॥

प्राणायाम-सुतीक्ष्णेन मात्राधारेण योगवित्।
वैराग्योपल घृष्टेन छित्त्वा तन्तुं न बध्यते ॥२४॥
अमृतत्वं समाप्नोति यदा कामात् स मुच्यते।
सर्व्वैषणा विनिर्मुक्ताश्छित्त्वा तन्तुं न बध्यते ॥
छित्त्वा तन्तुं न बध्यते ॥ २५ ॥

इति चुरिकोपनिषत् समाप्ता ॥ १३ ॥

---

मूलाधाराद् यतिर्देवि। स्वाधिष्ठानपदं नयेत्।
तदस्थं जीवमखिलं प्रसन्नौ चिन्तयेद् व्रती ॥
तडित् कोटि प्रतीकाशं तस्मादुत्थाय सत्वरम्।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरत् ॥
तत्र स्थित्वा क्षणं देवि। पूर्ववद् योगमार्गवित्।
अनाहतं नयेद् योगी तत्र पूर्ववदाचरेत ॥
उत्थाय तस्माद् भ्रूमध्ये मोरचक्र वसेत् पुनः।
यत्र चोर महाशक्त्या कोटिसूर्य्य समप्रभा ॥
मनसा सह वागीशा भित्त्वा ब्रह्मार्गलं क्षणात्।
परामृत महाम्भोधौ विश्रान्तिं तत्र कारयेत् ॥
तत्रस्थ परमे देव शिव परम कारणम्।
शक्त्या सह समायाप्य तयारैक्य विभावयेत्" ॥

इति ज्ञातमुत्क्रान्तिकालं वञ्चयित्वा यदि जीवितुमिच्छन् तदावरोहं कुर्य्यादित्यपि तत्रोक्तम्। तद्यथा —

"यदि वञ्चितुमुद्युक्त कालं कालविभागवित्।
कालस्तु यावद् व्रजति तावत्तत्र सुखं वसेत् ॥
ब्रह्मद्वारार्गलस्यापो देह कालप्रयोजनम्।

चतुरभ्यास-योगेन छिन्देदनभिशङ्कितः ॥ १४ ॥
ततः कण्ठान्तरे योगी समूहन् नाडि-सञ्चयम् ।
एकोत्तरं नाडिशतं तासां मध्ये वराः स्मृताः ॥१५॥
इडा रक्षतु वामेन पिङ्गला दक्षिणेन तु ।
तयोर्मध्ये वर स्थानं यस्त वेद स वेदवित् ॥१६॥

---

सर्वत्रावच्छेदेन व्यवधायक मांसादि विदार्य स्थानात् स्थानान्तरे गमनञ्च ।

चतुरिति । शरीरस्तरेषु 'चतुर्षु' गुद मिश्र नाभि हृदय स्थानेषु अभ्यासयोगेन नाम रूप मर्म प्राणान् छिन्देत् । अथवा 'चतुर्वार' चतुरावृत्त्या प्राणमंथ्याङ्गे काय निर्मोचे च सर्वेषु स्थानेष्वभ्यास योगेन ।

नन्वेव छेदने देहाभिमान त्यागेन देहपात स्यादत आह, अनभिशङ्कित इति । अय भाव, न ह्यभिमान त्यागेन देहपातो भवति सुषुम्णादिषु तथा दर्शनात्, ध्यानिना चिरकाल देहावस्थानश्रुतेय, न वा चक्रादि भेदेनापि सा शङ्केति ॥ १४ ॥

तत इति । तदनन्तर योगी 'कण्ठान्तरे' कण्ठमध्ये नाडी सञ्चय 'समूहन्' सञ्चयीकुर्वन् छिन्देदित्यनुषङ्ग । कियत्यो नाड्य सन्ति ? इत्यपेक्षायां मध्यमकण्ठामाह, एकेति । 'वरा' उत्तमा ॥ १५ ॥

इडा वामेन पिङ्गला दक्षिणेन इत्येव वक्तव्ये रक्षतुशब्द योग शिष्याणामपि विद्यासम्प्रदायोच्छेदो माभूदिति । 'वर स्थान' सुषुम्णाख्य 'त' तदधिष्ठातार पुलिङ्ग निर्देशात् ॥ १६ ॥

सुषुम्णा तु परे लीना विरजा ब्रह्मरूपिणी।
द्वासप्तति-सहस्राणि प्रति नाड़ीषु तैतिलम् ॥१७॥
छिद्यते ध्यानयोगेन सुषुम्णैका न छिद्यते।
योग-निर्म्मलधारेण क्षुरेणानलवर्चसा ॥ १८ ॥
छिन्दिन्नाड़ीशतं धीरः प्रभावादिह जन्मनि।
जातीपुष्प-समायोगैर्यथा वास्यन्ति तैतिलम् ॥१९॥
एवं शुभाशुभैर्भावैः सा नाड़ी तां विभावयेत्।
तद्भाविताः प्रपद्यन्ते पुनर्जन्म-विवर्जिताः ॥२०॥

ध्यायतेऽध्यासिता तेन तन्यते प्रेरिता पुनः ।
सूयते पुरुषार्थञ्च तेनैवाधिष्ठिता पुरा ॥ ४ ॥
गौरनादवती सा तु जनित्री भूतभाविनी ।
असिता सित-रक्ता च सर्वकामदुघा विभोः ॥५॥

---

माया 'ध्यायते' चिन्त्यते जगत् स्रष्टुं समाश्रयति, नारी मिवर्त्तुं, सा च तदुक्तम्,—

"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत !" ॥ इति ।

तेन 'अध्यासिता' आक्रान्ता आरूढा प्रेरिता च सती 'तन्यते' स्वयमेव कार्यरूपेण ततो भवति, कर्मकर्त्तरि कर्मवत् प्रत्ययः । तेनैवाधिष्ठिता सती पुरा 'पुरुषार्थं' भोग्यं सूयते प्रसूतवती कर्मकर्त्तरि पुरि लुङ् प्राप्ते इति भूते ऽनद्यतने लट् ॥ ४ ॥

भोग्यवस्तु जनकत्वेन माया ध्यात्वा रूपयति, गौरिति । इयं 'गौः' दोग्ध्री । दोग्ध्री चेत् व्यापारं करोति न इत्याह, 'अनादवती' नादरहिता अचेतनत्वादनुभवसमर्था ईश्वराधीनेत्यर्थः । यद्वा 'गौरी' शुक्ला सत्त्वप्रधाना सती नादवती वेदप्रवर्त्तिका, पुंवद्भावः पूर्वस्य । "गौरः शुक्लेऽरुणेऽपि च" इति विश्वः । 'असिता' तामसी, सिता चासौ रक्ता च 'सितरक्ता' सात्त्विकी राजसी चेत्यर्थः । 'विभोः' ईश्वरस्य 'सर्वकामदुघा' सर्वान् कामान् दोग्धि यथेष्टं कार्यकरी । महानारायणीये श्वेता श्वतरे च अजामेकामित्यादिमुक्तम्,—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् ।

पिबन्ति नाम विषयसङ्घाताः कुमारकाः ।
एकस्तु पिबते देवं स्वच्छन्देन वशानुग. ॥ ६ ॥
ध्यान-क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रथमं प्रभुः ।
सर्वसाधारणीं दोग्ध्रीमिज्यमानां सुयज्वभिः ॥ ७॥

---

यजो होको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः " ॥ इति ॥ ५ ॥

जीवानां बहुत्व, भोक्तृत्वमीश्वरस्यैकत्वञ्चाह, पिबन्तीति । 'नाम' शब्द 'विषय' अर्थ, तयो समाहार नाम विषय 'पिबन्ति भुञ्जते 'कुमारका' जीवा, 'एक' ईश्वर 'पिबते' पाययतीत्यर्थ, तद्विधम् । "प्रयोजक व्यापार कर्त्रभिप्राय क्रियाफलम्" इति णिजट । छान्दसत्वादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदम् । 'वशा' स्वविधेया 'अनुगा' परि वारा यस्य स वशानुग ॥ ६ ॥

तर्हि किमस्य सर्वथा अभोक्तृत्वं ? नेत्याह, ध्यान क्रिया भ्यामिति । प्रथम ध्यायति भगवानिदमिति, तत पश्यति, सैव क्रिया, ताभ्यां च प्रथम भुङ्क्ते तदुच्छिष्टमन्यो भुङ्क्ते, ध्यानावलोकनमेव तस्य भोजन "न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृत दृष्ट्वा तृप्यन्ति" इति श्रुते ।

भुङ्क्ते इत्युक्तम्, का भुङ्क्ते ? तत्राह, सर्वेति । सर्वेषा 'साधारणीं' समभोग्याम् अव्याकृतरूपामित्यर्थ । "एकमस्य साधारणम्" इति श्रुते । दोग्ध्री तु स्वभावत अपेक्ष्यते, अन्यथा दोहाद्यभावादत आह, इज्यमानामिति । 'सुयज्वभि' साधु-याज्ञिकै 'इज्यमानां' हव्य कव्येन पूज्यमानाम् ॥ ७ ॥

पश्यन्त्यस्यां महात्मानं सुपर्णं पिप्पलाशनम् ।
उदासीनं ध्रुवं हंसं स्नातकाध्वर्य्यवो हवेत् ॥ ८ ॥
शंसन्तमनुशंसन्ति बह्वृचाः शस्त्र कोविदाः ।
रथन्तरे बृहत् साम्नि सप्तवैते च गीयते ॥ ९ ॥
मन्त्रोपनिषद् ब्रह्म पदक्रम-समन्वितम् ।
पठन्ते भार्गवा ह्यस्याथर्वाणो भृगूत्तमाः ॥ १० ॥

---

पश्यन्तीति । इयमस्यामीयमेव देहं त्यक्त्वा देहान्तरं गच्छतीति सुपर्णोपमम्, सुपर्णं 'पिप्पलं' कर्मफलमश्नाति, इति पिप्पलाशनम्, वस्तुतस्तु उदासीनं, स्नातकाध्वर्य्यव 'हवेत्' होमात् पश्यन्तीत्यन्वय । वहेदिति पाठे, तानिव 'वहेत्' निर्वहेत् योग क्षेमादिनेति व्याख्येयम् । हवे इति पाठे, हवन कर्मणि । ह्वयेदिति पाठे, तानिव वर्द्धयेत् । हये इति पाठे, 'हय' शब्द तदुपलक्षिते अश्वमेध कर्मणि ॥ ८ ॥

आध्वर्य्यव फलमुक्त्वा होत्रफलमाह शंसन्तमिति । 'शस्त्र कोविदा' सपादबन्धो मन्त्र ऋक, तया केवलया स्तुति शस्त्र गीयमानया तया स्तुति स्तोत्रम् "ऋग्भि शंसन्ति, यजुर्भि यजन्ति, सामभि स्तुवन्ति" इति यास्कवचनात् । शस्त्रे 'कोविदा' कुशला, फलं पूर्वोक्तमेवानुसन्धेयम् ।

सर्वत्र सामगाना व्यापारमाह, रथन्तरे इति । रथन्तरे गीयते बृहत्साम्नि गीयते सामभेदोऽस्मीति शेष । किं बहुना, सप्तवैते च सामभेदा गीयन्ते इति विपरिणाम । रथन्तर बृहत्साम, वैरूप्य, वैराजं, महानाम्नी, रैवती, वामदेव्यम्, इति सप्त सामानि । दोग्ध्री फलं पूर्वोक्तं ददातीति ज्ञेयम् ॥ ९ ॥

अथर्वणा व्यापारमाह, मन्त्रेति । मन्त्राश्च उपनिषदश्च

ब्रह्मचारी च व्रात्यश्च स्कम्भोऽथपलितस्तथा ।
अनड्वान् रोहितोच्छिष्टः पठ्यते भृगुविस्तरे ॥११॥
कालः प्राणश्च भगवानात्मा पुरुष एव च ।
शिवो भवश्च रुद्रश्च ईश्वरः पुरुषस्तथा ॥ १२ ॥
प्रजापतिर्विराट् चैव पार्थिवः सलिलमेव च ।
स्तूयते मन्त्रसंयुक्तैरथर्व-विहितैर्विभुः ॥ १३ ॥
तं षड्विंशकमित्येके सप्तविंशमथापरे ।
पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः ॥१४॥
चतुर्विंशति-सङ्ख्याकमव्यक्तं व्यक्त दर्शनम् ।

---

मन्त्रोपनिषदम् उपनिषच्छब्दोऽकारान्तो नपुंसकमस्ति । 'मन्त्र' मन्त्राणाम् ॥ १० ॥

भार्गव ग्रन्थानां विषयमाह, ब्रह्मचारीत्यादि सार्द्धश्लोकत्रयम्। तद्दर्शनविरूपेण भगवतो निरूपणमित्याशयेनाह, स्तूयते इति । 'अथर्वविहितैः' अथर्वप्रतिपाद्यैरर्थैः । 'विभु' ईश्वरः परमात्मा, षड्विंशकं पौराणिका, सप्तविंशं तद्भेदा एव

"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहङ्कृतिः ।
महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः" ॥ इति ।

शिवेन सहितो सप्तविंश इति शाक्तायनाः । अथेति । 'साङ्ख्यं' ज्ञानं, तत्सम्बन्धी साङ्ख्यं तं ज्ञानगम्यमित्यर्थः ॥११-१४॥

चतुर्विंशति सङ्ख्याकमिति । कपिला चतुर्विंशति सङ्ख्याक मन्तुवन्, तदुपरितनं पञ्चविंशकमित्यर्थः । तदुक्तम्,—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति ।

अद्वैतं द्वैतमित्येके त्रिधा तं पञ्चधा तथा ॥ १५ ॥
ब्रह्माद्यं स्थावरान्तञ्च पश्यन्तो ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः ॥ १६ ॥
यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावर-जङ्गमम् ।
तस्मिन्नेव लयं यान्ति बुद्बुदाः सागरे यथा ॥ १७॥
यस्मिन् भावा. प्रलीयन्ते लीनाश्चा व्यक्ततां ययु' ।
नश्यन्त व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ १८ ॥
क्षेत्रज्ञाधिष्ठितञ्चैव कारणैर्व्यञ्जयेद्बुधः ।
एवं सहस्रशो देवं पर्य्यश्यन्तं पुन. पुनः ॥ १९ ॥

---

स्वयम् 'पश्यामत' ममत्वञ्च 'ध्यात्मदर्शन व्याप्तस्य जगतो भासकम, अद्वैत वेदान्तिन , द्वैत काणादय , त्रिधा गुणभेदेन, पञ्चधा तु भूतभेदेन, "स एकधा भवति, त्रिधा भवति, पञ्चधा भवति, सप्तधा, नवधा, पुनश्चैकादश इति श्रुत्यन्तरात् ॥१५॥

'द्विजा' त्रैवर्णिका वेदविद । ब्रह्मेति ब्रह्मणाद्यं स्थाव रादि तस्मिन् प्रोत तमेक ब्रह्मैव पश्यन्तीत्यन्वय । लय यान्ति सर्वे भावा 'लीनाश्चा' लीनम् आस्य सुख तारतम्येन यालक्षण येषा ते तथोक्ता । यस्मिन् प्रोता सन्तो व्यक्तता 'ययु' गता पुनर्नश्यन्ते नश्यन्ति भूयश्च व्यक्तता 'जायन्ते' जनयन्ति आत्मभावितत्वान्तत्वात् सकर्मक, गच्छन्ति वा। द्वि' कथनं सृष्टिप्रलययोरभ्यास ज्ञापनार्थम् ॥ १६—१८ ॥

क्षेत्रज्ञेन अधिष्ठित शरीर, 'कारणै' अनुमितिकारणै हेतुभि. चिन्मतत्वेनाधिष्ठित क्रियावत्त्वाद्रथादिवदित्यादिभि ,'व्यञ्जयेत्' लक्षयेत, 'बुध' पण्डित । एव सहस्रश पर्य्यश्यन्त

किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं ? किं तद्ध्यानं ? को वा ध्याता, ? कश्चिद्ध्येयः ? इति ।

अथैभ्योऽथर्वा प्रत्युवाच, ओमित्येतदक्षरमादौ प्रयुक्तं ध्यान ध्यायितव्यम् ।

---

सर्वार्थसिद्धिदं शिवमाराध्य विधूतविघ्नव्रातो भगवन्महेश्वरपूजनेन विधूताखिलकल्मषो दैशिकः श्रुतिप्रोक्तमार्गेण साधित यमादि प्रत्याहारान्त योगाङ्गधारणा पूर्वकं ध्यानपथमारुरुक्षुः सबीजयोगी मन्त्रस्याङ्गत्वात् सर्वमन्त्रशिरोमणि प्रणवमव्ययमस्य स्वरूपतश्च निर्णीय ध्याने विनियोक्तुं पुनः प्रकृत तमेवानुसन्धत्ते, शिष्यत्वादिति । अत्र प्रष्टृणां त्रित्वम् एभ्य इत्यत्रेऽनुवादादवसीयते । आख्यायिका तु विद्या स्तुत्यर्था ॥ १ ॥

प्रश्नानाह, किमादावित्यादि । 'आदौ' सर्वमन्त्रादौ सर्ववेदादौ मुख्यत्वेन च प्रयुक्तं, ध्यायते यत्तदिति व्युत्पत्त्या 'ध्यानं' ध्येयं 'ध्यायितव्यं' ध्यानार्हञ्च किमित्यर्थः । अत्र छान्दसविदमत् षट् । प्रथमप्रयुक्तो ध्येयश्च मन्त्रः क इति प्रथमप्रश्नार्थः । किं तद्ध्यानमिति । 'तस्य' ध्यातव्यस्य मन्त्रस्य किं ध्यानमिति द्वितीयः प्रश्नः । को वा 'ध्याता' अधिकारी इति तृतीयः । कश्च 'ध्येयं देवः' इति चतुर्थः । 'चित्' इति वितर्के, को देवो ध्येयः ? इति विचार्य्य वक्तव्यमित्यर्थः । इति शब्दः प्रश्नसमाप्तौ ।

प्रश्नोत्तरमाह, ओमित्येतदक्षरमिति । सर्वस्य वक्ष्यमाण मन्त्र ब्राह्मणादेर्देवता ध्यानस्य च 'आदौ' प्रथम प्रयुक्तम् 'आदौ' ईश्वरं वाचकत्वेन प्रतिनिधित्वेन वा प्रयुक्तमित्यर्थः ।

रुचिरा भास्वती स्वभा,

प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या। द्वितीया शुभा रौद्री रुद्रदेवत्या। तृतीया कृष्णा विष्णुमती विष्णुदेवत्या। चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदेवत्या। स एष ह्योङ्कारश्चतुष्पादश्चतुःशिराः।

---

पाठेऽपठितत्वात्, अन्यथा पादाश्चत्वार इत्यत्र छन्दांसि चत्वारीति च पठेत्, वर्णावसानत्वाच्चार्धमात्रा तुर्या, अत्र वर्णधर्मो च्छन्दसोऽसम्भवात्। नारसिंहे तु विराडित्यपि पठितं, तच्चौपचारिक छन्दस्त्वं बोध्यम्। पञ्चरूपिनीमास्मि।

मूर्धन्यवस्थितायास्तु मात्राया ध्यानमाह, रुचिरेति। 'रुचिरा' रम्या 'भास्वती' दीप्तिमती 'स्वभा' अन्यनिरपेक्ष प्रकाशा।

इदानीं मात्राणां वर्णानाह, प्रथमेति। रक्ता वर्णेन सृष्टिहेतुत्वेन राजसत्वात्, 'ब्राह्मी' ब्रह्मवती, अग्रे विष्णुमतीत्युक्तत्वात्। ब्रह्मा देवतापि तटस्थो भविष्यति, न सम्बन्ध इति शङ्कानिरासाय ब्राह्मीत्युक्तम्। 'शुभा' शुक्ला चन्द्रसन्निभा 'रौद्री' नित्य सन्निहितरुद्रा, 'पुरुष' ईश्वर।

यद्यपि ब्रह्मविद्योपनिषदि अकारादीनां क्रमेण ब्रह्म विष्णु रुद्रा देवता उक्ता, तथा तृतीया मात्रा "मकारश्चाग्नि सङ्काशा विधूमो विद्युतोपम" इत्युक्तम, अत्र तु ब्रह्म रुद्र विष्णवो देवता उक्ता तथा तृतीया मात्रा च कृष्णा उक्ता इति विरोध। तथा अथर्वशिरसि "या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन" इति देवता वर्णविपर्यास उक्त,

चतुर्थ्यर्द्धमात्रा स्थूल-ह्रस्व दीर्घ प्लुतः ॥
ओमोमोमिति विरुत्वाथ तुर्यं. शान्तात्मा
प्लुतप्रयोगे न समम् इत्यात्मज्योति. सकृदावर्त्तव्यः ।

---

तथापि वस्तुतो ब्रह्मादीनां मायामिकरूपत्वादुपासनाङ्गत्वेन फलभेदाय तत्तद्रूपोपादानम् । एतेन वर्णभेदोऽपि परिहृतः, ध्यानभेदेन फलभेदात् अतएव कालाग्निरुद्रोपनिषदि महेश्वर सदाशिव शिवा शिवं प्रति प्रणव वर्णत्रये देवा उक्ताः, आगमेषु क्वचित् सात्त्विकादिभेदेन एकस्या एव देवतायास्त्रिधा ध्यानमुक्तम् वास्तवस्थितिस्त्वत्रैव वक्ष्यति,—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते" ॥ इति ॥

कल्पभेदेन वा ब्रह्मादीनामुत्पत्तिक्रमे भेदः । चत्वारः 'पादाः' अकारोकारमकारार्द्धमात्राः विश्वतैजसप्राज्ञतुरीयलक्षणा यस्य, स चतुष्पाद्, चत्वारि 'शिरांसि' उत्तमाङ्गानि मुखस्थानीयानि अग्नयो यस्य, स चतुःशिराः । अकारादीनां पादत्वं प्राथम्यात्, सर्वधर्म्याश्रयत्वाच्च अग्नीनां मुखत्वं "मुखादग्निरजायत" इति श्रुतेः अग्नेः सतएव मुखत्वादस्य निर्दिष्टत्वाच्च द्रष्टव्यम् ।

स्थूलं रूपं त्रिधा विभज्य सूक्ष्मं पृथक् करोति, चतुर्थीति । चतुर्थ्यर्द्धमात्रा नादरूपा सूक्ष्माकारा । स्थूले विभागमाह स्थूलेति । यः स्थूलः वर्णकूटरूपः प्रणवः स ह्रस्वदीर्घप्लुतभेदैः स विधेययोरपि विशेषणविशेष्यत्वमात्रविवक्षया समासः ।

ह्रस्वादीनां स्वरूपमभिनीय दर्शयति ओमोमोमिति । प्रथमः एकमात्रः, द्वितीयो द्विमात्रः, तृतीयस्त्रिमात्र इत्यर्थः ।

स एष सर्वान् प्राणान् सकृदुच्चारितमात्रः,
स एष मूर्द्धमुत्क्रामयतीत्योङ्कारः ॥ १ ॥
प्रणवः सर्वान् प्राणान् प्रणामयति नामयति

---

नन्वेवं ह्रस्वो नाप्नोति कथं ह्रस्व ओङ्कारः ? नैष दोषः, पार्षदस्मृतिरियम्, यथा तत्रभवतां नारायणीयानां सुजात एव भव्य सूनृत अध्वर्यो ओम् अद्भिः सुतमिति व्याकरणात् सिद्धे प्रयोगे तस्य ह्रस्वत्वं नास्तीत्यर्थः इति विरक्त इत्यभिनीय तस्योपसंहारः।

चतुर्थः पादः क्व वर्त्तते ? अत आह, मूतप्रयोगे इति। वर्त्तते इति शेषः, तत्रैवाभिव्यक्तत्वात्; 'नखमम्' अनुपमं रूपम्, 'इति' हेतोः आत्मज्योतिमत्। विरम्यमाण-घण्टानादादायुपमापि न भवति, ततोऽप्यतिसूक्ष्मत्वात्। 'सकृदावर्त्तव्यः' सकृदावर्त्तयितव्यः अनाहत-शब्दरूप इत्यर्थः। यदा सकृद्विभागः तदापि कुतो भवतीति चेत् ? श्रूयतां, निर्विशेषत्वात् पूर्वापरविभागे भेदकाभावात्, तथा निर्विशेषत्वात् पूर्वापरावृत्तौ भेदकाभावात् सकृदावर्त्तव्यः शब्दब्रह्मसञ्ज्ञः।

स एष इति। वर्णित-प्रणवस्योपसंहारः। ओङ्कार-शब्दस्य प्रवृत्ति-निमित्तमाह, सर्वान् प्राणानिति। 'प्राणाः' दशवायवः; तान् समनस्कान् आत्मीन् षट्चक्र-भेदनेन सुषुम्णाद्वारेण मूर्द्धानमानयतीत्यर्थः। पुन स एष इत्यनुवाद आदरार्थः। अनेकार्थत्वान्निपातानाम्। ओमित्यूर्द्ध्वभावे कर्द्धान् प्राणान् *कारयति उत्कारयितुरित्योङ्कार इति ओमित्यभिरवयं ध्येय इति-*भावः।

तस्य नामान्तरमाह, प्रणव इति। प्रणवशब्द-निमित्त-

वै; तस्मात् प्रणवश्चतुर्धावस्थितः इति वेददेवयोनिः, ध्येयाध्येति सम्भर्त्ता सर्वेभ्यो दुःखभयेभ्यः सन्तारयति।

तारणात्तारणानि सर्वाणीति विष्णुः सर्वान् जयति, ब्रह्माबृंहत् सर्वकारणानि सम्प्रतिष्ठाप्य ध्यानात्।

---

माह, सर्वोमिति। 'प्रणाम' नम्रतापादनम्, मानम आत्मभा-वापादनम्। चतुर्धा यतोऽवस्थितः, ततश्चतुर्णां वेदानां देवानाञ्च योनिः, अनेन क्रमेण पूर्वत्रापि वेदाश्चत्वारो देवाश्चत्वार इति पाठेन भवितव्यम्। साम्प्रदायिकैर्निर्णयो विधेय।

किं तद्ध्यानमिति यत् पृष्टं, तदुत्तरं निगमयति, ध्येयाध्येति। ध्यै धातो रूपं, ध्यातव्या धारणीया यद्यादयो बुधा न त्यातव्या ध्यातव्या इत्यर्थं। धारणस्य फलमाह, सम्भर्त्तेति। 'सम्भर्त्ता' यत् हि पापादीनां धारयिता तारयति चाश्रितान्, तस्य किं वक्तव्यम्।

को ध्याता? इति प्रश्ने ध्याता तत्र विष्णु निदर्शयन्नोत्तरयति, तारणात्तारणानीति। 'तारणेन' चाश्रितानां दुःखभयात् भयेन 'तारणानि', चक्रवचि निङ्ग, छान्दसो वचनाभाव, ग्रस्तानि अभिभूतानि दुःखभयानि सर्वाणि 'इति' ईशो विष्णुः सर्वान् 'जयति' अभिभवति दैत्यादीन्। अथवा 'तारणात्' तारकत्वाद्धेतो 'तानि' पापादीनि सर्वाणीति पूर्वोक्तप्रकारेण विष्णुर्ध्यातव्यानिति शेष।

ध्यानफलमाह, सर्वान् जयतीति। अत्र ब्रह्मापि 'बृंहत् बृंहत्' गमनात्, कथात्? 'सर्वकारणानि' सर्वेन्द्रियाणि

विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तम्।

ब्रह्म-विष्णु-रुद्रेन्द्राः सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतानि, कारणं सर्वैश्वर्यसम्पन्नं शिवमाकाशमध्ये ध्रुवस्थम् ।

---

'मनसि स्थाप्य' स्थिरीकृत्य ध्यानात्, विष्णुः ब्रह्मणोऽध्येतृकथनेन तत्फलार्थी ध्यातेत्युक्तं भवति ।

कथमिदेवम् ? इति चतुर्थमुत्तरयति, विष्णुर्मनसीति । नादान्ते प्रणिवादारा शान्ते ब्रह्मणि, प्रणवो हि पञ्चकूटात्मकः अकारोकार मकार बिन्दु नादात्मकः तत्र नादान्ते परमात्मस्थाने 'स्थाप्य' धारयित्वा 'ध्येयं' ध्यानार्हतमम् ईशानं मनसि विष्णुः 'प्रध्यायन्ति' प्रध्यायतीत्यर्थः । वचनव्यत्ययोऽन्येषामपि ईशस्य ध्येयत्वसूचनाय ।

ननु अन्यान् देवानपहाय ईशान एव किमिति ध्येयः ? अत आह, ईशा वेति । वा शब्द एवार्थे, ईशैव सर्वमिदं प्रयुक्तमास्ते ।

ननु भवतु सर्वं प्रयुक्तं, न तु ब्रह्मादयः इत्यत आह, ब्रह्मेति । 'इन्द्रः' मघवा, एते चत्वारः ईशा 'सम्प्रसूयन्ते' जन्यन्ते, सह भूतानि, भूतसहितानि इन्द्रियाणि ईशा सम्प्रसूयन्ते ।

पुनः किं विशिष्टेन प्रयुक्तम् ? अत आह, कारणमिति । 'कारणं' साधकतमम् उपायभूतं, साधकतमं सर्वमेव ईशा प्रयुक्तमित्यर्थः, स हि प्रथमसुपायबोधकः, 'ऐश्वर्यं' प्रभुशक्तिसम्पन्नम् । कार्यभाव निदर्शनाय सर्वकार्यं मूर्द्धन्यमाकाशमाह, शिवमिति । 'शिवं' निर्दोषं 'मध्ये' सर्वस्यान्तः 'ध्रुवम्'

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते ॥

तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति, कृत्स्नमोङ्कारगतञ्च सर्वज्ञानयोगध्यानानां शिव एक एव ध्येयः, शिव ओङ्कारः, सर्वमन्यत् परित्यज्य एतामधीत्य द्विजो गर्भवासान्मुच्यते, गर्भवासान्मुच्यते ॥ २ ॥

इत्यथर्वशिखोपनिषत् समाप्ता ॥ १५ ॥

---

एकरूपेण तिष्ठति। मध्ये ध्रुवत्वम् आकाशम् ईशा प्रयुक्त, तत्र वाय्वादीनामुपलक्षणं यद्वा मध्यमादि चतुष्टयं शिवस्य विशेषणं जन्मलयमहतानिवृत्तये।

माहात्म्यकथनेन सूचितां प्रणवस्य पञ्चकूटतामाह, ब्रह्मेति। 'पञ्चधा' अकारादिरूपेण।

ध्यानात्मकस्य धर्मस्य फलमाह, तत्रेति। तत्राधिक्ये फलाधिक्यमिति न्यायात्। कृत्स्नमोङ्कारगतञ्चेति। 'कृत्स्नम्' ओङ्कारपादादि सर्वं ओङ्कारगतञ्च ध्यात्वा क्रतुशतस्यापि फलमवाप्नोतीत्यनुषज्यते।

परमोपदेशमाह, सर्वमन्यत् परित्यज्येति। ध्यानेन सम्बध्यते। शिव एव परमो ध्येय इति चतुर्थसूत्रमुपसंहरन् तदध्ययनफलमाह एतामिति। 'एताम्' उपनिषदम् अथर्वशिखां समग्राम्। द्विज इति शूद्रनिरासः। 'द्विरुक्तिः' समाप्त्यर्था, इति शिवम्।

ब्रह्मोपनिषत्।

ओं शौनको ह वै महाशालोऽङ्गिरस भगवन्त पिप्पलादं पप्रच्छ।

दिव्ये ब्रह्मपुरे रम्ये सम्प्रतिष्ठिता भवन्ति कथं ? सृजन्ति ? कस्यैष महिमा बभूव ? यो ह्येष महिमा बभूव, क एष ?।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद वाक्यानां दीपिकाथर्वशीर्षके॥
इत्यथर्वशिखोपनिषदो दीपिका सम्पूर्णा॥ १५॥

---

ब्रह्मोपनिषदारब्धा ब्रह्मज्ञानप्रदायिनी।
चतुष्खण्डा तु दशमी प्रमितां हृदयङ्गमा॥ १॥

इदानीं चतुरवस्थस्य चतुःस्थानस्य दशात्मनो ? निर्गुण ध्यानसिद्धये स्वस्वरूप सर्वं वक्तव्यमिति ब्रह्मोपनिषदारभ्यते, ओं शौनक इति। "ओम् अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि हृदयं कण्ठ मूर्द्धेति"। तत्र चतुष्पाद ब्रह्म विभातीति मन्त्रो द्वितीयखण्डादौ पठित प्रथमखण्डादा वपि केचित् पठन्ति, स पाठो नातिप्रयोजन, अर्थसम्बन्धा भावात्। 'महाशाल' महत्य शाला गृहा यस्य स तथा 'अङ्गिरस गोत्र अपत्यापत्यस अवान्तरभेदोऽयथारात् पिप्पलादं नामत 'पप्रच्छ पृष्टवान्।

प्रश्नमाह, दिव्य इति। 'दिव्ये वागादिदेव निवासार्हे ब्रह्मोपलब्धिस्थाने 'ब्रह्मपुरे शरीरे सम्प्रतिष्ठिता भवन्ति वागा दय कथम् ? इति शेष। किमाधारा वागादय शरीरे प्रति ष्ठिता ? इति प्रथम प्रश्न। सृजन्तीत्यत्रापि कथमिति

तस्मै स होवाच ब्रह्म-विद्यां वरिष्ठां प्राणो ह्येष आत्मा, आत्मनो महिमा बभूव।

देवानामायुः, स देवानां निधनमनिधनम्।

दिव्ये ब्रह्मपुरे, विरजं निष्कलं शुभ्रमक्षरं यद् ब्रह्म विभाति, स नियच्छति।

---

सम्बध्यते, किं यत्नेन स्वस्वविषयेषु व्याप्रियन्ते ? इत्यर्थः; एष द्वितीयः प्रश्नः। कस्यैष महिमा ? कुतः आदि-विस्तारो जात इति तृतीयः। यो हि एक एव प्रत्यक्ष महिमा बभूव, स एव किमात्मक' ? महिम तस्य प्रश्नद्वारा प्रश्नत एव तस्य 'दृष्टं वेदितव्यमिति चतुर्थः।

उत्तरमाह, तस्मै इति। 'सः' पिप्पलादः 'ह' प्रसिद्धौ '*उवाच' यतितो विचार्य्य समाप्ते ब्रह्म विद्यां, सर्वैरपि प्रश्नै*-र्ब्रह्मण एव पृष्टत्वात् ब्रह्मविद्येयम्, 'वरिष्ठाम्' अतिशयवतीं; प्राणो ह्येष इति। किं भौतिकः ? नेत्याह, आत्मेति। यस्मिन् देवाः प्रतिष्ठिताः, यद्बलेन च स्वकार्य्यं, यस्यैष महिमा, यत्र महिम्नस्तत्त्वं स एव आत्मेत्यर्थः; सामान्येनेदं चतुर्णामप्युत्तरम्, आत्मनः प्राणत्वं प्राणाश्रयत्वात्, अतएव तथा प्राण इति भगवत् सूत्रम्। विशेषेण तृतीयस्योत्तरमाह, आत्मन इति।

प्रथमस्य विशेषत उत्तरमाह, देवानामिति। 'देवानां' वागादीनाम् 'आयु' जीवितम्, आत्मा को ह्येवान्यात् कः प्राण्यादयेष 'आत्मा आनन्दो न स्यात्' इति श्रुतेः।

आत्मसत्तयैव तेषां सत्तालाभात्, तदेव विवृण्वन्नाह, स इति। 'निधन' मरणम्, 'अनिधन' जीवनम्।

स क्वास्तीत्याकाङ्क्षायामाह, दिव्ये ब्रह्मपुरे इति। चतुर्थमुत्तर-

मधुकर-राजानं माक्षीकवत्। यथा माक्षीकैकेन तन्तुना जालं विक्षिपति, तेनापकर्षति। तथैवैष प्राणः यदा याति संसृष्टमाकृष्य।

---

यति, विरजमित्यादि। यत् 'ब्रह्म' परमात्मा 'विभाति' प्रकाशते तत् 'विरजं' निरवद्यमस्तं, 'निष्कलं' कलाविद्याकार्यं प्राणादि, तद्रहितम्। निषेधमुखेनोक्ता विधिमुखेनाप्याह, शुभ्रमिति, 'शुभ्रं' उज्ज्वलं प्रकाशात्मकम् 'अक्षरम्' अश्नुते व्याप्नोति, अश्नोतेर्वाऽमराऽक्षरमिति सूत्रे।

कथं सृजन्तीत्यस्य द्वितीयस्योत्तरं, स इति। 'नियच्छति' नियमनं करोति। नियमनं बृहदारण्यके अन्तर्यामिब्राह्मणे, "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यः पृथिवीं यमयति, यं पृथिवी न वेद, एष त आत्मा अन्तर्याम्यमृत" इत्यादि चतुर्विंशतिभिः पर्यायैर्व्याख्यातम्।

तत्र प्रत्येकं पृथिव्यादीनां नियन्तृत्वमुक्तं, अत्र तु एकधा इत्याह, मधुकर राजानमिति। 'मधुकराः' इन्द्रियाणि तेषां 'राजानं' तदभिमानिनं जीवं नियच्छति तेन सर्वाणि नियतानि इत्युक्तं भवति। समासान्तविधेरनित्यत्वाट्टच् न कृतः। एतस्य सहनियन्तृत्वे दृष्टान्तमाह, माक्षीकवदिति। मक्षिकाभिर्जीवति 'माक्षीकः' ऊर्णनाभो लूताख्यः कीटविशेषः, तद्वत्। तद्विवृणोति, यथेति। यथा माक्षीका, छान्दसमीकारस्य दीर्घत्वं, टाप् च, लूता एकेन 'तन्तुना' लालारूपेण द्वारेण 'जालं' सङ्कुलाय 'विक्षिपति' स्वशरीरात् बहिः करोति, 'तेनैव' एकेन तन्तुना 'अपकर्षति' तत्स्थानादन्तर्नयति। सृष्टाति,—

प्राणदेवतास्ता: सर्वा नाड्य: सुखपे श्येनाकाशवत्, यथा खं श्येनमाश्रित्य याति स्वमालयमेवं सुप्तः ।

ब्रूते, यथैवैष देवदत्तो यष्ट्यादिना ताड्य-

---

"ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि ।
जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" ॥ इति ।

सूत्रस्थानीय आत्मा, तन्तुस्थानीयः प्राणः, जालस्थानीयं वागादि । यथायं दृष्टान्तः, तथैवैष प्राणो यदा 'याति' गच्छति, तदा सहैवमाकृष्य गच्छति, वागादि सहात्र गृहीत्वैव याति, यथोक्तम्,—"यथा सुहय पड्वीश शङ्कून् संवृहेत्, एवमितरान् प्राणान् समखिदद्" इति"।

नतु वागाद्याकर्षणे प्राणस्य तैः को सम्बन्धः ? इति प्रश्ने, नाडीद्वारक इत्युत्तरमिति, नाडीभिः प्राणस्य कः सम्बन्धः ? इति शङ्का स्यात्, तामपनेतुमाह, प्राणेति । प्राणो देवता यासां ताः प्राणदेवताः 'ताः' पूर्वोक्ताः सर्वाः 'नाड्यः' सुषुम्णाद्याः । यातीत्युक्तम्, तत् कदा ? इत्यपेक्षायामाह, सुखप इति । सुतरां स्वपनं 'सुखपः' सुषुप्तिः, तत्र सुषुप्तिकाले यातीत्यर्थः, । एतत् मरणमूर्च्छादेरप्युपलक्षणम् । क्व यातीति प्रश्ने स्वालयं यातीत्युत्तरम्, तत्र दृष्टान्तः, श्येनाकाशवदिति । विवरणं यथेति । श्येनो यथा 'खम्' आकाशमाश्रित्य स्वालयं याति, तथा सुप्तः 'स्वालयं' ब्रह्म याति ।

कथं ज्ञायते स्वालयं ब्रह्म याति, न यत्र कुत्रचित् ? इति पृष्टे उत्तरमाह, ब्रूते इति । उत्थितः सन् सुखमहमस्वाप्समिति

मानो न यति, एवमिष्टापूर्त्तैः शुभाशुभैर्न लिप्यते।
यथा कुमारो निष्काम आनन्दमुपयाति,
तथैवैष देवदत्त स्वप्न आनन्दमभियाति।
वेद एव परं ज्योतिर्ज्योतिष्कामो ज्योतिरानन्दयते॥

लोकान् मर्दति, तेन आनन्दं स्वाम्य गत, आनन्दाद्यागत इति ज्ञायते, आनन्दस्य ब्रह्म।

ननु शुभाशुभेषु कर्मसु सत्सु कथमानन्दानुभव सुषुप्तेऽपि स्यात्? इत्याशङ्क्य शुभाशुभाभाव प्रतिपादयितु दृष्टान्तमाह, यथैवैष इति। यथैव एष देवदत्त 'यथादिना' श्रान्तेनापि साध्यमानो 'न यति' न याति छान्दसो ह्रस्व, न गच्छति न पलायते, सुषुप्ते तत् कस्य हेतो? इतरानुभवाभावादित्येव तदपि कुत? कारणाधर्माभावादेव एवमनेन निदर्शनेन 'इष्टापूर्त्तै' इष्टापूर्त्तयो कर्त्ता तत्फलेन लिप्यते।

ननु यथा सुषुप्ते दुःखहेतुरधर्मो नास्ति, तथा सुखहेतु धर्मोऽपि नास्ति, तत् कुत आनन्दानुभव? इत्याशङ्क्य, यद्यपि धर्महेतुक आनन्दो नास्ति, तथापि नित्यानन्दो वर्त्तते, सोऽनुभूयते इत्युत्तरिते, किं तत्र प्रमाणम्? इति पृष्टे अनुभव प्रमाणयति, यथेति। ननु तथापि क्रीडनकादि निमित्त आनन्दो भविष्यतीत्यत आह, निष्काम इति। तदुक्तम् —

द्वावेव चिन्तयामुक्तौ परमानन्द सम्प्लुतौ।
यो विमुग्धो जडो बालो यो गुणेभ्य परङ्गत "॥ इति।

'स्वप्ने' सुषुप्ते।

नन्वानन्द सुख तत् सुषुप्तौ ज्ञानाभावेन कथ ज्ञायते?

स्वस्य ध्यानेन वैराग्यमैश्वर्यं स्वस्य पूजनात् ।
तथा रामस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥५॥
रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ॥
चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना ॥ ७॥

---

इत्यर्थः । निमित्तान्तरमाह, राज्यार्थिनामिति । धर्ममार्गमिति । स्वस्य चरित्रेण श्रुतेन धर्ममार्गं राति, 'नामत' उच्चारितात् ज्ञानमार्गं राति, स्वस्य ध्यानेन वैराग्यं राति, स्वस्य पूजनात् ऐश्वर्य्यं 'राति' ददाति, राज्यार्थिनां मनोगता नयेति समुच्चये । अतोऽस्य रामस्य रामाख्या भुवि स्यात् । अथ तत्त्वत' वस्तुतः पर्यन्त उच्यते इति शेषः ॥ ३ ॥ ४ ॥ ५ ॥

रमन्ते इति । 'अनन्ते' देश काल वस्तु परिच्छेद शून्ये 'नित्ये' नियते अवयव विकार शून्ये च, 'आनन्दे' सुखैकरूपे 'चिदात्मनि' चिद्घने अमूर्तब्रह्मणि 'योगिनः' निरुद्धेन्द्रिय ग्रामाः 'रमन्ते' ध्यानेन क्रीडन्ति इति हेतौ रामपदेन 'असावेव दशरथात्मज' 'परं' मुख्यं ब्रह्म अभिधीयते, अधिकरणे घञ् ।

ननु मूर्त्तस्य कथमानन्त्यादि ? अनन्तमूर्त्तस्यापि कथमाम स्यादि ? इति चेत् सम समाधि, अपरिदृष्टार्थं स्वीकार स्तूभयत्रापि सम, तस्मात् "द्वावेव ब्रह्मणो रूपे मूर्त्तं चा मूर्त्तं च" इति श्रुतेरसङ्कोच एव न्याय्य, वचनानि त्वपूर्वत्वा दिति न्यायादलौकिकार्थं बोधन श्रुतेरलङ्कार एव ॥ ६ ॥

रामशब्दार्थं निरूप्य ब्रह्मणः कथं शरीरित्वमित्याशङ्क

रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादि-कल्पना ।
द्वि चत्वारि षडष्टासां दश द्वादश षोडश ॥ ८ ॥
अष्टादशापि कथिता हस्ताः शङ्खादिभिर्युताः ।
सहस्रान्तास्तथा तासां वर्ण-वाहन-कल्पना ॥ ९ ॥
शक्ति-सेना-कल्पना च ब्रह्मण्येवं हि पञ्चधा ।

---

उत्तरमाह, चिन्मयस्येति । चिन्मयस्य ब्रह्मणः 'रूपकल्पना' मायिकं रूपमित्यर्थः । स्वरूपानतिरिक्तया मायाशक्त्या सर्वस्यैवैकस्यापि विरुद्धनानाधर्माविरोध इति भावः ॥ ७ ॥

तदायुधादिकमपि कल्पितमेवेत्याह, रूपस्थानामिति । रूपे तिष्ठन्तीति रूपस्थाः, तासां देवतानां पुंस्त्वकल्पना यथा रामः पुमान्, स्त्रीत्वकल्पना यथा सीता स्त्री, अङ्गकल्पना यथा त्रिनयनचतुर्भुजत्वादि रुद्रविष्ण्वादीनाम्, अस्त्रकल्पना यथा शार्ङ्गं धनुः, नन्दकः खड्गः; आदिशब्दाद्भूषणवाहनादि कल्पना ।

उक्तमर्थमुदाहरति, द्वि चत्वारीति । 'आसां' देवतानां 'द्वि' द्वौ हस्तौ कथिताविति विपरिणामोऽविभक्तिकश्च निर्देशः । तथा 'चत्वारि' चत्वारो हस्ताः कथिताः, यथा चरे-लिङ्गव्यत्ययः । तथा तासां षड्भुजाः कथिताः, यथा मूर्तिभेदानामम्बिकाया अष्टहस्ता पुरुषोत्तमस्य दश षडास्यस्य द्वादश षोडशाष्टादश चण्डिकामूर्तिभेदानाम् । शङ्खादिभिः' आयुधैः । सहस्रहस्ता विश्वरूपस्य । 'वर्णाः' श्याम गौरादयः, 'वाहनानि' गरुडसिंहादीनि तेषां कल्पना न तु वस्तुसतीति ॥ ८-९ ॥

शक्तेरपि कल्पना, स्वरूपानतिरिक्ताया पृथक् शक्तेरभावात् तथा पार्षदाः कल्प्यन्ते । पञ्चधा इत्युपसंहारमाह अथवा

**कल्पितस्य शरीरस्य तस्य सेनादि-कल्पना ॥१०॥**
**ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादि-सञ्ज्ञकः।**
**जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥११॥**

---

स्त्रियः शक्तय, तासां कल्पना, 'सेना' सैन्यं, तस्याः कल्पना । एवं शक्त्यपि पञ्चधा कल्पना, रूपकल्पना, ।१। पुंस्त्र्यङ्गत्वादि-कल्पना ।२। सर्वावाहन-कल्पना ।३। शक्ति-कल्पना ।४। सेना-कल्पना चेति ।५। अथवा, ब्रह्मण्येवं हि पञ्चधेति पर्यायान्वेति । ब्रह्मणि पञ्चायतनभेदेन कल्पितस्य देहस्य अतः तस्य सेनादि-कल्पना ॥१०॥

'ब्रह्मादीनां' स्थावरान्तानां वाचकोऽयं 'मन्त्र' राममन्त्र । श्रूयते हि "तथैव रामबीजस्थं जगदेतच्चराचरम्" इति । यद्वा "इति रामपदेनासौ परं ब्रह्म" इत्यादीनां पूर्वोक्तानामर्थाना 'वाचक' रामनामात्मको मन्त्र । आदिशब्द पूर्वोक्तविशेषापेक्षः ।

यद्वा 'ब्रह्म' अद्वैत-परमानन्दात्मा, तदादीनां वक्ष्यमाण सगुणत्वादिविशिष्टब्रह्मणां, "रमन्ते योगिनोऽनन्ते" इत्याद्युक्तस्य मूलसूत्रस्य च वाचक, 'अन्वर्थ' सर्वार्थानुगत ब्रह्म तत्त्वादि-प्रपञ्चजातं, तस्य 'सञ्ज्ञा' ज्ञानं यस्मात् सोऽन्वर्थसञ्ज्ञ', स्वार्थे क, सर्ववाचक इत्यर्थ ।

यद्वा द्वन्द्वगर्भो बहुव्रीहि, अन्वर्थं सञ्ज्ञक', आदिसञ्ज्ञ-कश्च, अन्वर्थता "मननात्त्राणनान्मन्त्र" इति, "राक्षसा मरणं यान्ति" इत्यादिश्च, आदिसञ्ज्ञता आदिमन्त्रत्वात् । स च 'मन्त्रिणा' गुरुतो लब्धमन्त्रेण जप्तव्य । विपक्षे बाधकम् एव-मिति । 'एवं विना' अर्थस्मरण पूर्वकमन्त्रजप विना 'देव' परमेश्वरः न प्रसीदति ॥ ११ ॥

क्रिया-कर्मेति कर्तॄणामर्थं मन्त्रो वदत्यथ ।
मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः ॥१२॥
सोऽभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना ।
विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ॥१३॥
स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते ॥

---

'क्रिया' आह्वानादिरूपा, 'कर्म' रक्षोमारणादि, 'इति' इदमासमर्थं कर्तॄणां भक्तानाम् अर्थं मन्त्रो वदति । मन्त्रत्व कस्मादत आह, अथेति । 'मननात्' ध्यानात् 'त्राणनात्' त्राणात् मन्त्रः, त्राणस्य कारणं त्राणं, मननेन त्रायते इति विग्रहः । आद्य मन्मदादित्वात् क्विबन्त अन्त्य सुपिस्थ इति ज्ञान्त । सर्वस्य 'वाच्यस्य' वक्तव्यस्य व्युत्पन्नयात्मकस्य वाचकः प्रणववत् ब्रह्माभिधायकत्वात् ब्रह्मणि च सर्वान्तर्भावादित्यर्थः ॥ १२ ॥

सेति । सा' यन्त्रकल्पना उभयस्य पुम्प्रत्ययात्मकस्य सूक्ष्मात्मकस्य मूलस्थूल व्यूहात्मकस्य वा अस्य देवस्य 'विग्रह' शरीरं, यन्त्रस्य देवताशरीररूपत्वात्, तस्य मेनादि कल्पमेति श्रुतिश्च सर्वदेव शरीरमित्यर्थः ।

अथवा 'सः' मन्त्र 'अभयस्य' निर्भयस्य 'देवस्य' रामस्य 'विग्रहः' शरीरं "मूर्तिं मूलेन कल्पयेत्" इति स्मृतेः, अतो यन्त्रकल्पना कर्तव्या, अत्र विधिः । अकरणे बाधक, विनेति ॥ १३ ॥

देवस्वरूपमाह, स्वभूरिति । 'स्वयम्' अन्यनिरपेक्ष 'भवति' विद्यते स्वभूः, 'ज्योतिर्मयः' प्रकाशात्मा, 'अनन्त' देशत कालतश्च परिच्छेदरहित । अनन्त रूपेव यत्रस्थे

जीवत्वेनेदमों यस्य सृष्टि-स्थिति-लयस्य च ॥१४॥
कारणत्वेन चिच्छक्त्या रजःसत्त्व तमो-गुणैः ।
यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥ १५ ॥
तथैव रामबीजस्थं जगदेतच्चराचरम् ।
रेफारूढा मूर्त्तयः स्युः शक्तयस्तिस्र एव चेति ॥१६॥
सीता-रामौ तन्मयावत्र पूज्यौ
जातान्याभ्यां भुवनानि द्विसप्त ।

---

रूपीतिपदं रूपवत्त्वेऽप्यनन्तताऽव्याहतिसूचनार्थम् । स्वेनैव भासते न त्वन्येन स्वप्रकाशत्वात् । यच्च 'स्वभू' बिन्दु 'ज्योतिर्मय' रेफमिश्रित आकारेण निरूपितो मध्य प्राणि हितो राजितिमन्त्रः 'स्वेनैव' स्वात्मनैव भासते, शब्दस्य हि स च रूपमयीं वाच्यवेति । यद्वा स्फोटस्य ब्रह्मरूपत्वात्, तस्य च स्वप्रकाशत्वात् ।

जीवत्वेनेति । यस्य जीवत्वेन स्थित्युत्पत्तिलयस्य च कारणत्वेन चिच्छक्त्या रज-सत्त्व तमो गुणै यथाशब्द मिदं वर्तते, यस्य चिच्छक्त्या जीवत्वेन गुणै कारणत्वेन च 'इद' मर्थं भासीत्यर्थं । किंच मूलम् इदम् ? 'ओं' परमात्मरूपमेव, वस्तुगत्या यथैवोद्धार, तथैव रामबीजमिति ।

वटबीज दृष्टान्तमाह, यथैवेति । प्राकृत महत्तर्यद्वटबीजा दुत्पन्न ॥ १४ ॥ १५ ॥

रैफारूढा इति । रेफोपरिस्था 'र' तत्र 'आ' ब्रह्मा 'म' महेश्वर तिस्रो मूर्त्तय, तिस्र 'शक्तय' उत्पत्ति स्थिति संहाररूपाः ॥ १६ ॥

सीता रामौ 'तन्मयौ' प्रकृति पुरुषमयौ अत्र बीजेन पूज्यौ

मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः।
फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २० ॥
यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् ।
तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत्॥२१॥
बीज-शक्ती न्यसेद्दक्ष-वामयोस्तनयोरपि ।
कीलो मध्ये विना भाव्यः स्ववाञ्छा-विनियोगवान् २२

---

तयोच्यते, जीवात्म-परमात्मनोरैक्यमेवोच्यते ; तेन यस्तत्त्वम-स्यादिवाक्यार्थः, स एवास्य मन्त्रस्यार्थ इत्यर्थः ॥ १९ ॥

वाक्यार्थमाह, मन्त्रोऽयमिति। अयं मन्त्रो वाचको रामस्य ; रामोऽस्य मन्त्रस्य वाच्यः स्यात् ; 'एतयोः' वाच्य-वाचकयोः 'योगः' बीजमन्त्रात्मना सहैक्यापादनं, सर्वेषां साधकानां फलप्रदः इति निश्चितमेव, तत्र उक्तम्,—

"देवता गुरु मन्त्राणां भावयेदैक्यमात्मना"। इति । २० ॥

यथेति। यथा य 'नामी' नामवान्, स वाचकेन नाम्ना आकारितः सन् अभिमुखो भवेत् आकारयितुरिति शेषः । यद्वा, 'आययति' आकारयति आय, अयूगतावाङ्पूर्वः क्विप्, तस्य, आकारयितुरित्यर्थः । तथा बीजात्मकः नामवज्जप्तस्य, येन आकारितो देवो मन्त्रिणोऽभिमुखः शीघ्रफलदो भवेदिति पदार्थ-वाक्यार्थ-ध्यानफलमुक्तम् ॥ २१ ॥

न्यासमाह, बीजेति। 'बीजम्' आद्यपद, 'शक्तिः' उत्तर-पदम्, तदुक्तं शौनककल्पे,—

"आनीयात् प्रथमं वर्णं बीजं शक्तिं ततोऽन्तिमम्" ॥ इति।

बीजं दक्षिणस्तने, शक्तिं वामस्तने न्यसेत् । केचन आयेति शक्तिमाहुः । कोऽन इति । कीलो य इति वर्णो 'मध्ये' स्तनयोः

सर्वेषामेव मन्त्राणामेष साधारणः क्रमः ।
अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ २३॥

---

मध्ये विना भाष्यः, नियमेन न्यसनीयः । न केवलं हृदि कीलो न्यास्यः, किन्तु तस्य 'वाञ्छा' अभिलाषो विनियोगश्च, तावपि न्यास्यावित्याह, स्वेति । प्रयोगस्तु, श्रीराम-प्रीत्यर्थं सहस्रादि मन्त्रार्थे वा जपे पूजायां वा विनियोग इति हृदि न्यसनीयमिति । यदा ननु हृदये कीलन्यासस्य किं प्रयोजनम् ? अत आह, स्वेति । स्वस्य वा 'वाञ्छा' साधकस्य योऽभिलाषः, तस्याः यो 'विनियोगः' विशेषेण नियोगः प्रवेदिति प्रेरणं, तद्वान् साधकेच्छापूरक इत्यर्थः ॥ २२ ॥

सर्वेषामिति । बीजं, शक्तिः, कीलकमिति त्रयं स्ववाञ्छा-विनियोगाख्यौ सहितस्त्रमन्त्राणामेव न्यसनीयमिति, सर्वमन्त्रस्य साधारणो विधिरित्यर्थः । प्रकारः शिष्टव्याख्या ऋष्यादय षडङ्गानि च यथा,—

"अनन्तो व्यापकः सेन्दुर्बीजं रामाय तत्परम् ।
षडक्षरोऽयमादिष्टो मन्त्रो कामदो मणिः ॥
ब्रह्मा ऋषिः सुनिश्छन्दो गायत्रं देवता मतो ।
दिग्विकेन्द्रैः प्रमाण्याप्ती रामो राक्षस-मर्दनः ॥
दीर्घभाजा स्वबीजेन कुर्यादङ्गानि षट् क्रमात् ।
मध्य-रन्ध्रे ध्रुवोर्मध्ये हृत्पाद्यन्तुष पादयोः ॥
षडक्षरापि विन्यस्येन्मन्त्रस्य मनुवित्तमः" ॥ इति ।

आद्यं बीजन्तु रां, तस्य ध्यानमाह, अत्रेति । 'रामः' दाशरथिः, 'अनन्तरूपः' अनन्तरूपः 'तेजसा' वह्निना वह्नितुल्यः, अथ च रामः 'अनुष्टुभा' चन्द्रेण सौम्यया विमलो ध्यातः चिन्तयेत्, तदा पुण्यकाव्याख्यं जगत् स्थितम्, अथ 'चन्द्रेण'

सत्यनुप्राणु विश्वश्चेदग्नीषोमात्मकं जगत् ।
उत्पन्नं सीतया भाति चन्द्रश्चन्द्रिकया यथा ॥२४॥
प्रकृत्या सहितः श्यामः पीतवासा जटाधरः ।
द्विभुजो कुण्डली रत्नमाली धीरो धनुर्धरः ॥२५॥
प्रसन्नवदनो जेता धृष्टयष्टकविभूषितः ।
प्रकृत्या परमेश्वर्या जगद्योन्याङ्किताङ्कभृत् ॥२६॥
हेमाभया द्विभुजया सर्वालङ्कृतया चिता ।
श्लिष्टः कमलधारिण्या पुष्टः कोसलजात्मजः ॥२७॥

---

विश्वबिन्दुमाविष्टयेत्, तदा चाग्नीषोमात्मकं जगत्, तदाधस्ता रामिति सिद्धम् । उत्पन्नमिति पूर्वेण सम्बध्यते । स राम 'सीता' लाङ्गलपद्धति, सेते सीता, औणादिकस्तन् प्रत्ययः । तज्जत्वात् जगत्कारणमपि सीता, तया भाति । दृष्टान्तश्चन्द्र इति ॥ २३ ॥ २४ ॥

इदानीं ध्यानार्थं देवस्वरूपमाह, प्रकृत्येति । श्यामो वर्णेन 'धीर' निर्भयः ।

'धृष्टि' प्रागल्भ्यं सा च 'अष्टकम्' अणिमाद्यष्टकञ्च, तेन 'विभूषित' शोभितः । अथवा, धृष्ट्याद्यष्टकावरणेन । 'प्रकृत्या' मूलप्रकृतिरूपया 'परमेश्वर्या' परमया ऐश्वर्या जगतां 'योन्या' उत्पत्तिहेतुभूतया 'अङ्कित' चिह्नित च, 'अङ्क' उत्सङ्ग, तं बिभर्ति ॥ २५ ॥ २६ ॥

'सर्वालङ्कृतयाचिता' सर्वेण अलङ्कृतेन अलङ्कारेण 'आचितया' व्याप्तया । सर्वालङ्कृताचितया इति वक्तव्ये छान्दसो विभक्तिलोपो प्रयोगः । यद्वा, सर्वैरलङ्कारैरलङ्कृतया, तया

दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः।
हेमाभेनानुजेनैव तदा कोणत्रयं भवेत् ॥ २८ ॥
तथैव तस्य मन्त्रस्य यस्याणुश्च स्वङेन्तया।
एवं त्रिकोणरूपं स्यात् तं देवा ये समाययुः॥२९॥
स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम्।
कामरूपाय रामाय नमो माया-मयाय च ॥३०॥

---

'पिता' चिच्छक्ति-रूपया। सर्वथानुकूलतया तया श्लिष्ट इति युक्तः पाठः। 'पुष्टः' विपुलाङ्गः, 'कोमलाङ्गः' कौशल्यायाः कौशल्यायाः आत्मजः पुत्रः ॥ २७ ॥

दक्षिणे इति। दक्षिणे भागे लक्ष्मणेन श्लिष्टः, अर्थात् वामे सीतया श्लिष्टः। तदुक्तम्—

*"वामभागे समासीनां सीतां काञ्चन-सन्निभाम्" इति।*

'तदा' देवतात्रय उपविष्टे सति 'कोणत्रयं भवेत्' एकं त्रिकोणं भवेदित्यर्थः। अनुजेनैवेत्येवकारेण अस्मिन् त्रिकोणे देवतान्तर-पूजा वार्यते ॥ २८ ॥

तथैवेति। यथा बीजमुक्तम्, एवं तस्य 'मन्त्रस्य' राम-मन्त्रस्य शेषोऽंश उच्यते इति शेषः। तस्य कस्य ? यस्य स्वङे-तया सह अणुः 'स्वं' रामस्वरूपं शब्दः, तस्य 'ङेता' विभक्ति-चतुर्थ्येकवचन तेन सह 'अणुः' सूक्ष्मो भागः मन्त्रांशो नतिः नमःशब्द इत्यर्थः। ङेतो रामो नमःशब्द स्वमन्त्रशेषोऽंश इत्यर्थः। 'एवं' सति षडक्षरे मन्त्रे सिद्धे सति द्वितीयं त्रिकोण-रूपं स्यात्, त्रिकोणद्वये कोणषट्क षडक्षर समावेशार्थं, तं देवा इति। ये देवाः तं समाययुः ॥ २९ ॥

दृष्टुं सभ्यावसराख्ये तं स्तुतिं स्तूयते यः, स स्तुतिः, तं

नमो वेदादिरूपाय ओङ्काराय नमोनमः ।
रामाधाराय रामाय श्रीरामायात्ममूर्त्तये ॥ ३१ ॥
जानकीदेह-भूषाय रक्षोघ्नाय शुभाङ्गिने ।
भद्राय रघुवीराय दशास्यान्तक-रूपिणे ॥ ३२ ॥
रामभद्र ! महेष्वास ! रघुवीर ! नृपोत्तम ! ।
भो दशास्यान्तकास्माकं रक्ष, देहि श्रियञ्च ते॥३३॥
त्वमैश्वर्यं दापयाथ सम्प्रत्याखरमारणम् ।
कुर्विति स्तुत्य देवाद्यास्तेन सार्द्धं सुखं स्थिताः॥३४

---

'स्तुति' स्तुतिविषय यत्र । स्तुतिमाह, कामेति । 'कामेन' स्वेच्छया रूपं यस्य, तस्मै, 'रामा' स्त्री, तस्या 'धाराय' धर्त्रे, रमाधारायेति युक्त पाठः । 'शुभाङ्गिने' शुभमङ्गमस्यास्ति शुभाङ्गी, तस्मै । छान्दसत्वात् कर्मधारयादपि मत्वर्थीय साधु, शुभश्चासावङ्गी चेति वा, 'भद्रो' प्रधान पुरुष ॥३०॥३१॥३२॥

रामभद्र इत्यादि सम्बोधन चतुष्टयम् । भो भगवन 'दशास्यान्तक !' दश आस्यानि यस्य सः दशास्य रावण, तस्य अन्तकः । अस्माकं 'रक्ष' रक्षणं कुरु, 'ते' तव 'श्रियञ्च' अस्मभ्यं देहि । यद्वा 'ते अस्मान्' त्वदीयानस्मान् श्रियं देहीत्यन्वय । त्वम् 'ऐश्वर्यम्' ईश्वरभाव 'दापय' दायस्वेत्यर्थः प्रत्यर्पय, 'अथ सम्प्रति' इदानीं सद्भिः पेषं प्रार्थयामहे, 'पाखरमारणम्' खरो नाम राक्षस तस्य मारणं पर्यन्तं कुरु, भो दशास्यान्तक । अस्माकं रक्षेत्यादिना प्रार्थितन्तु पौरुषं पयात् करिष्यसि । 'इति स्तुत्वं' एव स्तुत्वा 'देवाद्याः' मुख्यदेवाः 'तेन' रामेण सार्द्धं सुखं यथा स्यात्तथा स्थिताः रावणवधेन निश्च

स्तुवन्त्येवं हि भूपय तदा रावण आसुरः ।
रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ॥ ३५ ॥
स रावण इति ख्यातो यद्वा रावाच्च रावणः ।
तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥३६॥
विचेरतुस्तदा भूमौ देवीं सन्दृश्य चासुरम् ।
हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया ॥३७॥

---

श्रीलाभ पतीत्यमाया । पन्तिस्तुत्येति पाठे 'पन्ति समीपे स्थिता' इत्यन्वय ॥ ३३ ॥ ३४ ॥

न केवल देवाद्या', किन्त्वन्येऽपीत्याह, स्तुवन्तीति । यथा च देवा स्तुवन्ति, एवमुभयोऽपीत्यर्थ । 'तदा' खरादिषु हतेषु रावणनामा 'आसुर' असुर एव आसुर 'य' प्रसिद्ध, स राम पत्नीं वनस्थां 'स्वनिवृत्त्यर्थं' स्वविनाशार्थम् आददे ॥ ३५ ॥

स इति । रामपत्नीं वनस्थामाददे य, स रावण इति रावण पदव्युत्पत्ति । 'यद्वा' अथवा, 'रावात्' शब्दात् कैलास तोल नावसरे ईश्वरेण भारे दत्ते रौति स्म, तेन रावण , तत पूर्वन्तु दशाननमामाभूत् । तदिति । 'तत्' तस्मात्, यत राम पत्नीमाददे, तस्मात् कारणात् सीतामीक्षितु यद्व्याज, तेन । सीताशब्दो दश्यादिस्तालव्यादिरपि ॥ ३६ ॥

विचेरतुरिति । न सीतेक्षणमुद्देश्यम्, किन्तु दशास्य वध एवोद्देश्य, यदर्थं देवप्रार्थनया अवतीर्ण । 'भूमौ' उपानदाद्य नन्तर्हिताया विचेरतु देवी राजपत्नी सीता 'सन्दृश्य' इत स्ततो विलोक्य असुर कबन्ध हत्वा 'शबरीं' तापसी गत्वा प्राप्य तैन तत् स्वागत गृहीत्वा तस्य रामस्य आज्ञया 'तया'

पूजितावीरपुत्रेण भक्तेन च कपीश्वरम् ।
आहूय शसतां सर्वमाद्यन्तं राम-लक्ष्मणौ ॥ ३८ ॥
स तु रामे शङ्कितः सन् प्रत्ययार्थंञ्च दुन्दुभेः ।
विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ ३९ ॥
सप्ततालान् विभिद्याशु मोदते राघवस्तदा ।
तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ॥४०॥

---

अथर्था पूजितौ सन्तौ ईरः वायुः तस्य पुत्रेण 'भक्तेन' भजन परेण हनूमता कारणेन प्रयोज्यकर्त्रा च 'कपीश्वरं सुग्रीवम् आहूय 'शसताम्' अशसताम् कथितवन्तौ सर्वम् 'आद्यन्तम् आदिश्च अन्तश्च आद्यन्तौ तम् आद्यन्त, आहिताग्न्यादिषु, आदित आरभ्य अन्तं यावत् ॥ ३७ ॥ ३८ ॥

ततो रामेण सुग्रीवस्य राज्ये प्रतिज्ञाते सति, स तु रामे शङ्कितः' वालिवधे रामस्य सामर्थ्यमस्ति न वेति सन्दिग्धः सन 'प्रत्ययार्थं' स्वविश्वासार्थम्। 'तत्प्रत्ययार्थम्' इति पाठे 'तस्मिन्' रामे पौरुषस्य विश्वासार्थं 'दुन्दुभेः' दैत्यस्य वालिहतस्य 'विग्रहम्' अस्थिपुञ्ज रामाय दर्शयामास, अयं दैत्यो वालिना हत इति। ततो 'यः' रामो दुन्दुभेर्द्रष्टा, स तं दुन्दुभिम् 'अचिक्षिपत्' अनतिप्रयत्नेनैव क्षिप्तवान्। अथवा "यस्तु मातरिश्वनि" इति निर्घण्टः, 'यः' मातरिश्वा इव वायुरिव तूलपुञ्ज शीघ्रकारी रामः 'तं विग्रहम्' अचिक्षिपत् ॥ ३९ ॥

ततो बलनिश्चये सत्यपि धानुष्कता सन्देह निरासार्थं सप्ततालान् एकेन बाणेन 'आशु शीघ्रं विभिद्य निर्भिद्य मोदते' रघोरपत्यं 'राघवः रामः । वर्त्तमानकाल निर्देशस्तु कल्पे कल्पे एव भवतीति द्योतनार्थम्। तेन सुग्रीवो हृष्टः सन्

जगामागर्जदनुजो वालिनो वेगतो गृहात् ।
वाली तदा निर्जगाम तं वालिनमथाहवे ॥ ४१ ॥
निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः ।
हरीनाहूय सुग्रीवस्त्वाह चाशाविदोऽधुना ॥४२॥
आदाय मैथिलीमद्य ददत श्वाशु गच्छत ।
ततस्ततार हनूमानब्धिं लङ्कां समाययौ ॥ ४३ ॥
सीतां दृष्ट्वासुरान् हत्वा पुरं दग्ध्वा तथा स्वयम् ।
आगत्य रामाय स्वयं न्यवेदयत तत्त्वतः ॥ ४४ ॥

---

'सराम' रामसहित 'तस्य' वालिनः 'पत्तनं' नगरं 'जगाम' गतवान्। तत्र 'अगर्जत्' सिंहनादं कृतवान् 'अनुजः' कनिष्ठः, वालिनः इत्युभाभ्यां सम्बध्यते। 'वेगतः' वेगेन गृहात् जगाम, अगर्जच्चेत्यन्वयः। 'निर्जगाम' गृहान्निर्गतः ॥ ४०॥४१ ॥

'आशाविदः' दिक्कुशलाः। 'अधुना' शीघ्रं गच्छत, आशु मैथिलीमादाय अद्य ददत, 'श्व' आशु स्वरूपतो वा सन्देशतो वा आशु आदाय आशु ददतेत्यर्थः। श्वशब्द आश्चर्ये। ददत, श्व आशु, इति पदच्छेदः।

'ततः' तदनन्तरं 'हनुमान्' ईशपुत्रः 'अब्धिं' समुद्रं 'ततार' तीर्णवान्, तीर्त्वा लङ्कां समाययौ। कथाविस्तरस्तु वाल्मीकीयाद्बोद्धव्यः ॥ ४२ ॥ ४३ ॥

अशोकवनिकायां सीतां दृष्ट्वा 'असुरान्' रक्षःकुमारादीन् हत्वा 'पुरं' लङ्कां पुच्छाग्निना दग्ध्वा तथा स्वयं रामं प्रति आगत्य रामाय 'स्वयं' स्वमुखेन तत्त्वतः 'न्यवेदयत' नितरां बोधितवान्। द्विः स्वयम्पदमादरातिशयार्थम् ॥४४॥

तदा रामः क्रोधरूपी तानाहूयाथ वानरान् ।
तैः सार्द्धमादायास्त्रांश्च पुरीं लङ्कां समाययौ ॥४५॥
तां दृष्ट्वा तदधीशेन सार्द्धं युद्धमकारयत् ।
घट श्रोत्र-सहस्राक्षजिद्भ्यां युक्तं तमाहवे ॥ ४६ ॥
हत्वा विभीषणं तत्र स्थाप्याथ जनकात्मजाम् ।
आदायाङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥४७॥
ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः ।
धनुर्धरः प्रसन्नात्मा सर्वाभरण-भूषितः ॥ ४८ ॥
मुद्रां ज्ञानमयीं याम्ये वामे तेजः-प्रकाशनम् ।

---

'क्रोधरूपी' क्रोध रूपयति निरूपयति आत्मना दर्शयति, तच्छीलः। तैः सार्द्धं लङ्कां समाययौ। किं कृत्वा ? 'अस्त्रान्' एकोनपञ्चाशत प्रयोग मन्त्रान्, एकोनपञ्चाशत संहार-मन्त्रान् विश्वामित्रोपदिष्टान् कृशाश्वसुतान् 'आदाय' गृहीत्वा ॥ ४५ ॥

तामिति। 'ताम्' लङ्कां दृष्ट्वा 'तदधीशेन' रावणेन सार्द्धं युद्धम 'अकारयत्' कृतवान्, कारितवान् वानरैरिति वा। 'घट-श्रोत्र' कुम्भकर्णं, 'सहस्राक्षजित्' इन्द्रजित् मेघनाद। 'तैः' वानरर्विभीषणादिभिः ॥ ४६ ॥ ४७ ॥ ४८ ॥

याम्ये दक्षिणे बाहौ। ज्ञानमुद्रा, तल्लक्षणन्तु,—
"तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत ।
वाम हस्ताम्बुज वामे जानुमूर्धनि विन्यसेत् ।
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य वल्लभा" ॥ इति ॥
वामे 'तेज प्रकाशन' धनु धृत्वा, यद्वा 'प्रकाशन तेज'

धृत्वा व्याख्यान निरतश्चिन्मयः परमेश्वरः ॥ ४८ ॥
उदग्-दक्षिणयोः स्वस्य शत्रुघ्न भरतौ धृतः।
हनूमन्तञ्च श्रोतारमग्रतः स्यात्त्रिकोणगम् ॥ ५० ॥
भरताधस्तु सुग्रीव शत्रुघ्नाधो विभीषणम्।
पश्चिमे लक्ष्मणं धृत्वा धृतच्छत्र सचामरम् ॥ ५१ ॥

---

पुस्तकाख्यमुद्रा धृत्वा वाममुष्टि स्वाभिमुखी कृत्वा पुस्तक मुद्रिकाव्याख्यान निरत स्थित। व्याख्यानमुद्रा तु,—

"दक्षिणाङ्गुष्ठ तर्जन्याग्रयलग्ने पराङ्गुली।
प्रसार्थ्य सहतोत्ताना एषा व्याख्यानमुद्रिका।
रामस्य च दयस्यन्या भत्यन्त प्रयसी मता"॥ इति ॥

ध्यान व्याख्यान पुस्तकाना युगपत् समाश्व। धनुर्मुद्रा तु,—

"वामस्य मध्यमाग्रन्तु तर्जन्यग्रे नियोजयेत्।
अनामिका कनिष्ठाञ्च तस्याङ्गुष्ठेन पीडयेत्।
दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता" ॥ इति ॥ ४८ ॥

'स्वस्य रामस्य। धृत इत्यत्र धृतचामरौ इति पदलोपो द्रष्टव्य। तदुक्तम्,—

उभौ भरत शत्रुघ्नौ पार्श्वयोर्धृतचामरौ" ॥ इति ॥

यद्वा धृङ् स्थैर्य्ये, व्यत्ययेन परस्मैपदम्, छान्दस शप्लुक्। 'धृत' स्थिरीभूय तिष्ठत। हनूमन्तञ्च श्रोतारं रामि व्याख्या तरि शिष्यम् 'अग्रत गुरोरग्रे त्रिकोणम पूजयेदिति प्रकार स्यात्। अथवा भरत शत्रुघ्नौ धृतवान् राम स्यात् अग्रतो हनूमन्तञ्च धृत स्यात् कार्त्तरि च न लोकाव्ययेति षष्ठी निषेध ॥ ५० ॥

'भरताध' रामात् भरतस्याधोभागेन धृत्वा स्थापयित्वा

तदधस्तौ तालहन्तकरौ त्रासं पुनर्भवेत् ।
एवं षट्कोणमाद्यौ स्वदीर्घाङ्गैरेव संयुतः ॥ ५२ ॥
द्वितीयं वासुदेवाद्यैराग्नेय्यादिषु संयुतं ।
तृतीयं वायुसूनुञ्च सुग्रीवं भरतन्तथा ॥ ५३ ॥
विभीषणं लक्ष्मणञ्च अङ्गदञ्चारिमर्दनम् ।
जाम्बवन्तञ्च तैर्युक्तः ततो धृष्टिर्जयन्तकः ॥ ५४ ॥
विजयश्च सुराष्ट्रश्च राष्ट्रवर्द्धन एव च ।
अकोपो धर्म्मपालश्च सुमन्त्रैरेभिरावृतः ॥ ५५ ॥
सहस्रदृग्वह्नि-धर्म्म-रक्षो-वरुणानिलाः ।
इन्द्वीश-धात्रनन्ताश्च दशभिस्त्वेभिरावृतः ॥ ५६ ॥

---

राम कर्त्ता। 'तदध' लक्ष्मणाध 'तौ' भरत शत्रुघ्नौ इत्याख्यान निरत स्थित इत्यनुषङ्ग । पुनस्त्रास भवेत्, तेन [illegible] पदस्य जातम्। इदानीमावरणान्याह, आद्यावित। 'एव' देव 'आद्यौ' प्रथमावरणे 'स्वदीर्घाङ्गै' स्वस्य दीर्घाङ्गै रा॰ री॰ रू॰ रै॰ रौ॰ रः इत्येतै संयुक्त स्यात् ॥ ५१ ॥ ५२ ॥

इद दलमूले। तृतीयमिति। वायुपुत्रादीन् प्राप्य तैर्युक्तो देवो यदा भवति, तदा तृतीय भवेदित्यर्थ । एते पूर्वादिषु दलेषु क्रमेण पूज्या । 'तत' अनन्तर 'सुमन्त्रै' सुमन्त्र सहितै अभिरावृततयेन, तदा चतुर्थ भवति। धृष्टिस्थाने धृष्टिरिति केचित् पठन्ति। इदं दलाग्रे ॥ ५३—५५ ॥

पञ्चममाह, सहस्रदृगिति। 'सहस्रदृक्' इन्द्र 'धर्म्म' यम, 'रक्षोवरुणवायव' इति सुगम पाठ । 'इन्दु' चन्द्र 'ईश' ईशान ; 'धाता' ब्रह्मा, अधोगामयोर्मध्ये

वह्निस्तदायुधैः पूज्यो नवादिभि रलङ्कृतः।
वशिष्ठ वामदेवादि-मुनिभि समुपासित ॥५७॥
एवमुद्देशत. प्रोक्तं निर्देशस्तस्य चाधुना।
त्रिरेखापुटमालिख्य मध्ये तारद्वय लिखेत् ॥५८॥
तन्मध्ये वीजमालिख्य तदध॰ साध्यमालिखेत्।
द्वितीयान्तञ्च तस्योर्द्ध षष्ठ्यन्त साधक तथा ॥५९॥

पूज्य, 'यनन्त शेष स निर्ऋति वरुणयोर्मध्ये', ततो वह्नि, 'तदायुधै इन्द्राद्यायुधै चाहत पूज्य, तदायुधान्यु क्तानि, यथा—

"वज्र शक्ति दण्डमसि पाशमङ्कुशक गदाम्।
शूल चक्र पद्ममेवामायुधानि क्रमाद्विदु" ॥ इति।

'नल नाम वानर चकलावतार', येन वद्ध सेतुर्नलसेतु रुच्यते। आदित्यन्द्वात्यात् नीलाद्यान् षोड़श दशावरणे वक्ष्याम। वशिष्ठादिभिश्च द्वादशभि सेवित, तैश्चावरणे पूज्या इति भाव। तानपि वक्ष्याम, एतेन दशावरण पद्म सूचित ॥ ५६ ॥ ५७ ॥

एवम् 'उद्देशत' सङ्क्षेपत पूजन प्रोक्त, तस्याधुना 'निर्देश' नि शेषतो देश उपदेश क्रियते श्रष्ठतरम् धारण यन्त्रमुप दिश्यते, तदेव चाङ्गादि देवता सहित मन्त्रवर्णसहित पूजन यन्त्रमित्यर्थ। त्रिधा रखा 'त्रिरेखा त्रिकोण, तस्या पुट द्वय षट्कोणम् आलिख्य 'मध्ये षट्कोणमध्ये 'तारद्वय प्रणवद्वय सव्यापसव्य लिखेत् ॥ ५८ ॥

तयोर्मध्ये आद्यवीजमालिख्य तस्याध साध्य षट्प्राम प्राप्यतर विषयमालिखेत्। कीदृश? द्वितीया विभक्त्यन्त

कुरुद्वयञ्च तत्पार्श्वे लिखेद्बीजान्तरे रमाम् ।
तत् सर्वं प्रणवाभ्यास्त्र वेष्टयेद् द्वि-वृत्तिमान् ॥६०॥
दीर्घभाञ्जि षडस्रेषु लिखेद्बीजं हृदादिभिः ।
कोणपार्श्वे रमा-माये तदग्रेऽनङ्गमालिखेत् ॥६१॥
क्रोधं कोणाग्रान्तरेषु लिख्य मन्त्राभितो गिरम् ।

---

'तयोर्द्ध' बीजस्योर्द्ध भागे षष्ठीविभक्त्यन्त 'साधक' षष्ठ्यादि कारक लिखेत् । कुरु कुरु इति वर्णद्वय 'तत्पार्श्वे' बीजपार्श्वे बीजस्य वाम दक्षिणयो लिखेत् । 'बीजान्तरे' बीजमध्ये साध्यस्योर्द्ध भागे 'रमा' श्रीबीज लिखेत् । 'तत्सर्व' बीजादि 'प्रणवाभ्या' पूर्वोक्ताभ्या यथा वेष्टित स्यात्, तथा लिखेत् । वृत्तेर्वृद्धि, तद्वान् लिपिविचक्षण. ॥ ५९ ॥ ६० ॥

दीर्घेति । 'षडस्रेषु' षट्कोणेषु 'हृदादिभि' सह, हृदयाय नम इत्यादि जातिसहित मूलस्य बीज लिखेत् । कीदृश बीज ? 'दीर्घभाञ्जि' दीर्घान् भजति तद्बीज दीर्घभाञ्जि षड्दीर्घयुक्तमित्यर्थः । कोणपार्श्वे त्रिकोणखण्डेषु रमाबीज मायाबीजे लिखेत् । 'तदग्रे' कोणाग्रे 'अनङ्ग' कामबीज लिखेत् । तेषामुद्धारो यथा—

"शान्तं वह्नि समारूढं वामनेत्रेन्दु सयुतम् ।
बीजमेतत्समुद्धृत्य प्रोक्तं चिन्तामणिमिवापरम् ॥
नकुलीशोऽग्निमारूढो वामनेत्रार्धचन्द्रवान् ।
बीज तस्या समाख्यात सेवितं सिद्धिकादिभि ॥
यक्षा भूम्या समारूढ शान्तिबिन्दु समन्वित ।
बीज मनोभुव प्रोक्त जगत्त्रय विमोहनम्" ॥ इति ॥६१

क्रोधमिति । 'क्रोध' हुङ्कार "हूं क्रोधबीज कवचम्"

वृत्तत्रयं साष्टपत्रं सरोजं विलिखेत् स्वरान् ॥६२॥
केसरेष्वष्टपत्रेषु वर्गाष्टकं तथा लिखेत्।
तेषु मालामन्त्र-वर्णान् विलिखेट्टर्मि सङ्ख्यया ॥६३॥
अन्ते पञ्चाक्षराणेवं पुनरष्टदलं लिखेत्।
तेषु नारायणाष्टार्णं लिखेत् तत् केसरे रमाम् ॥६४॥
तद्बहिर्द्वादशदलं विलिखेद् द्वादशाक्षरम्।
तथों नमो भगवते वासुदेवाय इत्ययम् ॥ ६५ ॥
आदिक्षान्तान् केसरेषु वृत्ताकारेण सं लिखेत्।

---

इति लक्ष्मीकुलार्णवे। त कोर्ध कोणाग्रेषु कोणान्तरेषु च 'लिख्य' लिखिला 'अमित' परित 'गिर' सारस्वत बीजम् ऐमिति लिखेत्। वृत्तत्रय षट्कोणस्योपरि एक वृत्त, मध्ये चैक, पत्राग्रे चैकम्, अष्टपत्र सहित 'सरोज' कमल विलिखेत्। स्वरान् केसरेषु च द्विशो लिखेत्। अष्टपत्रेषु स्वरोपरि वर्गाष्टकम् क च ट त प य श ळाद्य लिखेत्। तेषु पत्रेषु वक्ष्यमाण मालामन्त्र वर्णान् षट् सङ्ख्यया विलिखेत् ॥६२॥६३॥

'अन्ते' चरमपत्रे पञ्चाक्षराम् तावतामेवावशिष्टत्वात्। 'एवं' पूर्वोक्त वृत्तत्रय साष्टपत्रमित्यादि मार्गेण पुनरष्टदल लिखेत्, 'तेषु' दलेषु नारायणस्य अष्टाक्षरम् ओं नमो नारायणायेति प्रत्येक मेकैकाक्षर लिखेत्।

केसरेषु 'रमां' श्रीबीज लिखेत् ॥ ६४ ॥

'तद्बहि' तदुपरि द्वादशदल पद्म विलिखेत्। द्वादशाक्षर माह, ओं नम इति। अथ द्वादशार्णो ज्ञेय इत्यर्थः ॥ ६५ ॥

'आदिक्षान्तान्' अकारादि क्षकारान्तान् वृत्ताकारेण न तु

तद्बहिः षोडशदलं विलिखेत् केसरे ह्रियम् ॥६६॥
वर्म्मास्त्र नति-संयुक्तं दलेषु द्वादशाक्षरम् ।
तत्सन्धिष्वीरजादीनां मन्त्रान् मन्त्री समालिखेत्॥६७
हं स्रं भ्रं ब्रं लं श्रं ज्रंश्च लिखेत् सम्यक् ततो बहिः ।
द्वात्रिंशार महापद्मं नाद बिन्दु समायुतम् ॥६८॥
विलिखेन्मन्त्र राजार्णान् तेषु पत्रेषु यत्नतः ।
ध्यायेदष्टवसूनेकादश रुद्रांश्च तत्र वै ॥ ६९ ॥

---

वैपरीत्येन प्रतिकेसरं चतुरश्चतुरो लिखित्वा बहिरिमे सर्वेति सम्भव 'ह्रिय' माया, 'वर्म्म हुं 'अस्त्र' फट् 'नति' नम शब्द 'दलेषु षोडशसु प्रत्येकमेकैको वर्ण 'तत् सन्धिषु षोडशपत्रसन्धिषु, ईरजादीनामिति। 'ईर' वायु, तज्जो हनुमान्, तदादीनाम् आवरणोक्तानां षोडशानां स्वाद्याक्षरा दीनि ऋकारबिन्दु सहितानि षोडश बीजानि, पञ्चदश त्व मिति, अक्षोपस्थाप्यमिति धृष्टधर्म्मपालस्य ध्रमिति, राष्ट्रवर्द्ध नस्य रूमिति, बीजानि, चकारसमुचितानि हनुमतो ह्रमिति, सुग्रीव सुराष्ट्रयो सुमिति, भरतस्य भ्रमिति, विभीषण विज ययोर्वृमिति, लक्ष्मणस्य लृमिति, शत्रुमर्दनस्य शृमिति, शाम्ब वद्धयन्तयोर्गृमिति एतानि पृथक् षोडश सन्धिस्थानेषु लिखेत् ।

नादेति। 'नाद' अर्द्धचन्द्र 'बिन्दु' चन्द्र, ताभ्यां प्रान्ते अन्वितम्। यद्वा नाद बिन्दु समायुत यथा स्यात्तथा 'मन्त्र राजार्णान्' नादविद्यान् सबिन्दुकान् लिखेत्।

ध्यायेदष्टवसूनिति। ते यथा,—

"धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनल ।

द्वादशैनांश्च धातारं वषट्कारस्य तद्बहिः।
भूपुरं वज्र-शूलाढ्यं रेखात्रय-समन्वितम् ॥७०॥

---

मन्युश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः" ॥ इति।
रुद्रानिति। ते यथा,—
"वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः॥
भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः।
स्थाणुर्भवश्च रुद्रश्च" इत्येकादश।
महायशा विशाम्पतिरिति विशेषणे॥१६।१७।१८।१९॥
'इनान्' सूर्य्यान्, ते यथा,—
"धातार्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः"॥

इति द्वादश। धातारमिति, 'धाता प्रथमादित्यः', अयन्तु वषट्कारस्य विशेषणम्। पुनरुक्तो वषट्कारो हि दानार्थः, दानेन लोका धीयन्ते इति वषट्कारो धाता भवति। भुवादि वषट्कारान्तान् द्वाविंशत् पत्रेषु न्यसेत्। ततो वहिर्भागे 'भूपुरं' भूपुरं, तल्लक्षणन्तु "भूमौ चतुरस्रं समन्तक पीठञ्च" इति। दिक्षु वज्राढ्यं, कोणेषु शूलाढ्यञ्च। रेखात्रयन्तु, "चतुरस्रं समान्तरेखा सम्मुखाष्टवज्राणि कुर्य्यात्" इति केचित्। सम्प्रदायविदस्तु चतुरस्ररेखास्वेवाष्टवज्राणि कार्य्याणि इति वदन्ति। स्वरूपन्तु अन्योऽन्याभिमुखसमानिचक्र रेखाद्वय परस्पर सम्बद्ध परस्परसम्बद्धमध्यरेखाद्वय मिति केचित्। रेखेति। सात्त्विकराजस तामस भेदेन॥७०॥

द्वारोपेतञ्च राश्यादि-भूषितं फणिसंयुतम् ।
एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥७१॥
नारसिंहञ्च वाराहं लिखेन्मन्त्रद्वयं तथा ।
क-प-रेफानुग्रहेन्दु-नाद शक्त्यादिभिर्युतः ॥७२॥
यो नृसिंहः समाख्यातो ग्रह-मारण-कर्मणि ।

---

'द्वारोपेतं' मण्डपवत्, 'राश्यादि भूषितं' ज्योतिषशास्त्र विहितं परितो राश्यादि स्थाप्यमित्यर्थः । भूपुरमेव भूतत्त्व मद्वाशिषञ्च भवति । 'फणिसंयुतं' फणिना शेषेण वृतमिति बोध्यम् ।

दिक्षु नारसिंहं, विदिक्षु वाराहं लिखेत् । नारसिंहमुद्धरति कपेति । क प योगे च, ततो रेफ, ततः 'अनुग्रह' औकारः, 'इन्दु' अनुस्वारः 'नाद' अनुस्वारानन्तरो वर्णविशेष नादाख्य चन्द्रार्धसन्निभः, ततः 'शक्ति' मन्त्र सामर्थ्यम्, आदि शब्दात् ब्रह्म प्रान्ताख्य क्ष्रौमिति रूपम् ॥ ७१ ॥ ७२ ॥

अस्य प्रातन्त्र्यमाह, य इति । 'ग्रह कर्मणि' भूतादि निग्रहणे, 'मारण कर्मणि' शत्रु वधादौ । अस्य ऋष्यादिक यथा,—

"ऋषिरत्रिश्च गायत्री छन्दः श्रीनृहरिः प्रभुः ।
देवता दीर्घयुग् बीजैनैवाङ्गं कल्पयेत् सुधीः ।
ध्यानं सर्वस्य देवस्यैकमेव प्रजपेन्मनुम् ।
सहस्राणां द्वात्रिंशत् दशांशे पायसैः शुभैः ।
अर्चां होमादिकं सर्वमस्य पूर्ववदाचरेत् ।
मन्त्रराजवदेवास्य प्रयोगानपि साधयेत् ।
इत्येषा सम्पुट केचित् सद्गिरन्ते मनुत्तमम्" ॥ इति ।

दीर्घा-क्रूरयुता ह्लादिन्यथो दीर्घा समानदा ॥७५॥
क्षुधा क्रोधिन्यमोघा च विश्वमप्यथ मेधया ।
युता दीर्घा ज्वालिनी च ससूक्ष्मा मृत्युरूपिणी ॥७६
सप्रतिष्ठा ह्लादिनी त्वक्क्ष्वेल प्रीतिश्च सामरा ।
ज्योतिस्तीक्ष्णाग्नि सयुक्ता श्वेतानुस्वार सयुता ॥७७
कामिका पञ्चमी लान्तस्तान्तान्तो धान्त यूत्यथ ।
स सानन्तो दीर्घयुतो वायु स्वच्छयुतो विष ॥७८॥

---

'दीर्घा' मात्रा नकार 'अक्रूरम' अनुस्वारेण सयुता न, 'ह्लादिनी' दकार, 'अथो' अनन्तर 'दीर्घा' नकार सा समानदा मानदया कलया आकारेण सह वर्त्तमाना, 'क्षुधा' यकार तेन नन्दनाय इति सिद्धम ।

'क्रोधिनी' रफ अमोघा घकार । अनन्ता वेति युक्त पाठ, प्रणवकलासु अनन्ताया घकार कलात्वात्, कौर्त्यादि अमोघायास्ततुपर्वाचर कामकलात्वाच । विश्वम् ओकार, अपि अथ मेधया घकारेण युक्ता दीर्घा नकार 'ज्वालिनी' वह्निकला वकार सा ससूक्ष्मा सूक्ष्मया श्रीकण्ठादि तृतीय रूपया ऊकारेण सहिता 'मृत्युरूपिणी मृत्यु प्रणवकला शकार, 'सप्रतिष्ठा' प्रतिष्ठया आकारेण सहिता 'ह्लादिनी' दकार त्वक यकार , तन रघोघ्न विश्वदायेनि सिद्धम् ।

'क्ष्वेल' मकार 'प्रीति धकारस्य सामरा' सोधारा, ज्याति रफ तीक्ष्णा पकार 'अग्नि सयुक्ता' रैफसयुक्ता श्वेता सकार 'अनुस्वार सयुता सानुस्वारा कामिका पञ्चम' तकारपञ्चम मकार 'लान्त' वकार 'तान्तान्त' तस्यान्त

कामिका कामिका-रुद्र-युक्ताथोऽथ स्थिरा स ए।
तापिनी दीर्घयुक्ता भूरनिलोऽनन्तगोऽनलः ॥७९॥
नारायणात्मकः कालः प्राणोऽम्भो विद्यया युतम्।
पीता रतिस्तथा लान्तो योन्या युक्तोऽन्ततो नतिः ८०
सप्तचत्वारिंशद्वर्णो गुणान्तः सगुणः स्वयम्।
राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥८१॥

---

धकारः, तस्यान्तो दकारः 'धान्तः' नकारः, सः 'सानन्तः' अनन्तेन आकारेण सहितः 'दीर्घस्वरेण' आकारेण युतः 'वायुः' यकारः सूक्ष्मेण इकारेण युतः 'विषः' मकारः 'कामिका' तकारः, पुनः सैव 'रुद्रेण' एकारेण युक्ता, 'अथो अथ' अनन्तरं 'स्थिरा' जकारः, ततः सः, सकारात् परं एकारः; तेन मधुर-प्रसन्नवदनायामिततेजसे इति सिद्धम्।

अत्र सन्धिर्न कार्यः। 'तापिनी' बकारः दीर्घयुक्ता 'भू' लकारः, 'अनिलः' यकारः; तेन बलायेति। 'अनन्तगः' आकारगः 'अनलः' रेफः, 'नारायणः' आकारः, तदात्मकः 'कालः' मकारः, 'प्राणः' यकारः; तेन रामायेति सिद्धम्। 'अम्भः' वकारः 'विद्यया' इकारेण 'युतं' सहितं 'पीता' धकारः, 'रतिः' णकारः, तेन 'युता' संयुता, 'लान्तः' वकारः 'योन्या' एकारेण युक्तः, तेन विष्णवे इति सिद्धम्। 'अन्ततः' अन्ते 'नतिः' नमः शब्दः ॥७४॥७५॥७६॥७७॥७८॥७९॥८०॥

एवं सप्तचत्वारिंशत् 'वर्णः' वर्णं। 'गुणान्तः सगुणः स्वयम्' स्वयं सगुणोऽपि भक्तानां 'गुणान्तः' त्रैगुण्यनाशकः मोक्षदत्वात्। अथवा, 'गुणान्तः' बीजत्रयान्तः 'सगुणः' बीजत्रयादिः। तदुक्तम्,—

"तारकं कामबीजेन सम्पुटं प्रजपेदमुम् ।
शिरस्याननयक्ष्णो च भ्रूमध्ये सिद्धयेऽपि च ॥
श्रोत्रयोर्घ्राणयोश्चैव गण्डयो रोष्ठयोरपि ।
दन्तयोरास्यदेशे च दो पत् सन्ध्यग्रकेषु च ॥
कण्ठे हृदि स्तनद्वन्द्वे पार्श्वयो पृष्ठदेशतः ।
जठरे चाप्यधिष्ठाने गुह्ये वर्णान् प्रविन्यसेत् ।
नव षट् सप्तदश षड् रुद्रसङ्ख्यैः षडङ्गकम् ॥
वन्दिष्ट नीलकमलामलकान्ति मम
चापासि बाण करसम्बुज पद्मनेत्रम् ।
पीताम्बरं स्मितसुधा मधुरं सुरारि
सञ्चिन्तयेन्निखिलराज-सुता-सहायम् ॥
जपेद् द्वादश लक्षञ्च ध्यात्वैव विजितेन्द्रियः ।
बिल्वे फले प्रसूनैश्च पद्मैस्त्रिमधुर प्लुतैः ॥
मधुरत्रय युक्तेन पयोऽन्नेन सिताम्बुजैः ।
होमं दशांशतः कुर्यात् तथा सर्वत्र तर्पणम् ॥
प्राक् प्रोक्ते पूजयेत् पीठे पूज्याश्च बाह्यदेवताम् ।
प्रथमाङ्का रति प्रोक्ता सप्तमी ज्या समीरिता ॥
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च हनूमता ।
सुग्रीव पञ्चम प्रोक्त षष्ठ प्रोक्तो विभीषण ॥
अङ्गद सप्तम प्रोक्तो नीलोऽष्टम उदाहृत ।
नारदश्च वशिष्ठश्च वामदेवस्तृतीयकः ॥
जाबालिर्गौतमश्चापि भरद्वाजोऽथ काश्यप ।
वाल्मीकिश्चाष्टम प्रोक्तो लक्ष्मीश्चाथ सरस्वती ॥
रति प्रीति कीर्त्ति कान्ती तुष्टि पुष्टिरिमा क्रमात् ।
धृष्टिर्जयन्त विजयो सिद्धार्थ कार्य्य साधक ॥
अशोकश्चैव सर्वस्या श्रीवत्सश्च गदा तथा ।

इदं सर्वात्मकं यन्त्रं प्रागुक्तमपि सेवितम्।
सेवकानां मोक्षकरमायुरारोग्य वर्द्धनम्॥ ८२॥
अपुत्रिणां पुत्रदञ्च बहुना किमनेन वै।
प्राप्नुवन्ति यथात् सम्यगत्र धर्म्मादिकानपि॥८३॥
इदं रहस्यं परममीश्वरेणापि दुर्गमम्।
एवं यन्त्र समाख्यातं न देयं प्राकृते जने॥ इति॥८४॥

---

पाञ्चजन्य कौस्तुभाख्यो वनमाला च दक्षिणे।
उत्तरे चक्र पद्मे च शार्ङ्ग चाथ मखाङ्कम्।
पश्चिमे धर्म्म गरुड धर्म्मपाल समन्वकान॥

इत्युक्तक्रमादेकैकस्मिन् षट् षट् यन्त्रे पद्मेति क्रमेण पञ्चो द्वारोऽमालाप्युक्त।

ओँ नमो भगवते ब्रूयाच्चतुर्थ्यां यदुनन्दनम्।
रक्षोघ्न विशदायेति मधुरादि ममीपयेत्॥
प्रमथ वदनायेति पश्चादमित तेजसे।
बलाय पश्चाद्रामाय विष्णवे मदनन्तरम्॥
प्रणवादि नमोऽन्तोऽयं मालामनुरुदीरित॥ ८१॥

'सुर्वात्मकम्' त्रैलोक्यमय 'प्रागुक्त' पूर्व्वाचार्य्यैरुक्तम् 'अनेन' यन्त्रेण, 'धर्म्मादिकान्' धर्म्मार्थ काम मोक्षान, धर्म्म ज्ञान वैराग्यैश्वर्य्याणि वा, 'अपि' शब्दात् अणिमादि सिद्धिरपि॥ ८२॥ ८३॥

'ईश्वरेण' सर्व्वशक्तिमतापि उपदेशं विना 'दुर्गमम्' अगम्यम्। इति श्रष्टो यन्त्राभिधान समाप्तो॥ ८४॥

भूतादिकं शोधयेद् द्वारपूजां
कृत्वा पद्माद्यासनस्थः प्रसन्नः ।
अर्चाविधावस्य पीठाधरोर्द्ध
पार्श्वार्चनं मध्यपद्मार्चनञ्च ॥ ८५ ॥

---

भूतादिकमिति । 'भूतानि' पृथिव्यादीनि पञ्च, आदि शब्दात् हृदयद्वारादि, तत् 'शोधयेत्' आत्मनि विलापयेत् । भूतशुद्धि प्राणप्रतिष्ठाया मातृकान्यासस्य चोपलक्षणम्, भूत शुद्धिप्राणप्रतिष्ठे मातृकान्यासञ्च कुर्य्यादित्यर्थः । तत् करण प्रकारस्तु,—

भूतशुद्धि ततः कुर्य्यात्तत्प्रकारोऽधुनोच्यते ।
पादादिजानुपर्य्यन्तं चतुरस्रं सवज्रकम् ॥
लयुतं पीतवर्णञ्च भुवः स्थानं विचिन्तयेत् ।
जान्वो रानाभि चन्द्रार्द्धनिभं रामेण लाञ्छितम् ॥
शुक्लवर्णं स्वबीजेन युतं ध्यायेदपां स्थलम् ।
नाभितः कण्ठपर्य्यन्तं त्रिकोणं रक्तवर्णकम् ॥
स्वबीजेन युतं .... वह्नेस्तु मण्डलम् ॥
कण्ठाद् भ्रूमध्य पर्य्यन्तं कण्ठ वायोस्तु मण्डलम् ॥
षट् कोणं विन्दुभिः षड्भिर्युतं बीजेन चिन्तयेत् ।
भ्रूमध्याद् ब्रह्मरन्ध्रान्तं वर्त्तुलं ख्यञ्च लाञ्छितम् ॥
धम्रवर्णं स्वबीजेन युक्तं ध्यायेन्नभस्तलम् ।
एवं ध्यात्वा पुनस्तानि भूतानि प्रविलापयेत् ॥
पृथ्वीमप्सु च ता वह्नौ वह्निं वायौ समीरणम् ।
प्रविलाप्य तथाकाशेऽप्याकाशं प्रकृतौ ततः ॥
परं ब्रह्मरूपां तां मायामद्धि परात्मनि ।

खड्ग चर्म धरं कृष्णं कुक्षौ दक्षिणतः स्मरेत् ।
ततः संशोधयेद्देह पूरकादि क्रमेण वै ।
विधाय प्राणसंरोध वायुबीजेन वायुना ।
वह्निबीजेन तेनैव सन्दहेत् सकलां तनुम् ।
भस्म तद्वामनासमार्गेण निर्गतं चिन्तयेत् सुधीः ।
ततो वमिति बीजेन प्लावयेत् सकलां तनुम् ।
सञ्जाते निर्मले देहे देवतोपासन क्षमे ।
आत्मजीवादि तत्त्वानि स्वस्थानं प्रापयेत्ततः ।
आत्मानं हृदयाम्भोजमानयेत् परमात्मनः ।
इत्यमन्त्रेण विधिवद्देवावश्यं विधीयते ।
भूतशुद्धि विहीनेन कृता पूजाभिचारिका ।
विपरीतं फलं दद्यादभक्त्या पूजनं यथा ।
भूतशुद्धिं विधायेत्थं ततो वै स्थापयेदसून् ।
पाशाङ्कुशेन पुटितां शक्तिमादौ समुच्चरेत् ।
यकारादि सकारान्तान् बिन्दु-मस्तक-लाञ्छितान् ।
तदन्ते उच्चरेत् प्राज्ञो व्योममर्द्धेन्दु-संयुतम् ।
ततो हंस पदात्मानौ ततोऽमुष्य पदं वदेत् ।
प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम् ।
अमुष्य जीव इह तु स्थितोऽमुष्य पदं ततः ।
सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ।
श्रोत्र-घ्राण पदे प्राणा इहागत्य सुखं चिरम् ।
तिष्ठन्त्वग्निवधू पूर्वं सत्यमुक्तपद युग ।
पाशादीनि प्रयोज्येव प्राणमन्त्रं समुद्धरेत् ।
अस्यर्षिर्ब्रह्मच्छन्दस्तु विराट् प्राणस्तु देवता ।
मयोऽग्निर्बिन्दुबीजं शक्तिस्त्वा मनोपिभिः ।
शिरो-वदन हृद्गुह्य पाद प्रणादि विन्यसेत् ।

चमुर्येति घटस्थाने साध्यमाम समुच्चरेत्।
विर्जपेत् साध्य मन्त्रं तत्वा मन्त्रमद्वारधी।
एष प्राण प्रतिष्ठाया' प्रकार परिकीर्तित।

या ग्राम, ह्रीं माया क्रोम् अङ्कुश। मातृकान्यासो यथा ऋष्यादिपूर्वं।

ऋषिर्ब्रह्मा वसुदिष्टो गायत्री च्छन्द ईरितम्।
सरस्वती समाख्याता देवता देशिकोत्तमे।
चक्षोव ह्रस दीर्घान्तर्गते षडवर्गके क्रमात्।
षडङ्गानि विधेयानि जातियुक्तानि देशिके॥
पञ्चाशल्लिपिभिर्विभक्त मुख दो पत्मध्य वक्षस्थलां
भास्वन्मौलि निबद्ध चन्द्र शकलामापीन तुङ्गस्तनीम्।
मुद्रामक्षगुण सुधाव्य कलश विद्याच हस्ताम्बुजै
र्बिभ्राणा विशदप्रभां त्रिनयनां वाग्देवतां माश्रये॥
ललाट मुख वृत्ताक्षि श्रुति घ्राणेषु गण्डयो।
ओष्ठ दन्तोत्तमाङ्गास्ये दो पत् सन्धग्रकेषु च।
पार्श्वं च पृष्ठतो नाभौ जठरे हृदयेऽसके।
ककुदंसे च हृत्पूर्वं पाणी पादयुगे तत।
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमात्॥ इति॥

द्वारपूजा कर्त्तव्येति। सा यथा,—

देशिको विधिवत् स्नात्वा कृत्वा पूर्वाह्णिका क्रिया'।
यायादब्धकृती मौनी यागार्थं यागमण्डपम्॥
चामन्य विधिवत्तत्र सामान्यार्घ्यं विधाय च।
द्वारमस्ताम्बुभि' प्रोक्ष्य द्वारपूजां समाचरेत्॥
ऊर्द्धोडुम्बरके विघ्नं महालक्ष्मी सरस्वती।
ततो दक्षिण शाखायां विघ्नेशेन समन्वित'॥
तयो' पार्श्वगते गङ्गा यमुने पुष्पवारिभि'।

कृत्वा मृदु-श्लक्ष्ण-सतूलिकायां
रत्नासने देशिकमर्चयित्वा ।
शक्तिस्वाधाराख्यकां कूर्म्म नागौ
पृथिव्यब्जे स्वासनाधः प्रकल्प्य ॥ ८६ ॥

---

देहस्थामर्चयेदस्य प्रतिद्वारमिति क्रमात्" ॥ इति ॥
पद्माद्यासनस्य इति । पद्मासनन्तु,—

"वामोरूपरि दक्षिणन्तु चरणं संस्थाप्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेत्
एतद्व्याधि विनाश कारि यमिनां पद्मासनं प्रोच्यते" ॥ इति

आदिशब्दात् स्वस्तिकादि । पूजाविधौ तु तन्निर्वाहार्थं मङ्गुष्ठ बन्धन हस्ताभ्यां न कर्त्तव्यम् । आदौ द्वारपूजां कृत्वा पद्मासने उपविश्य प्रसन्नचित्तो भूतशुद्ध्यादिकं कुर्य्यादित्यन्वयः ।

अर्घ्यादिविधाविति । 'अस्य' रामस्य 'अर्घ्यादिविधौ' पूजाविधौ, पीठस्य अधरदेशार्चनम्, ऊर्द्ध्वदेशार्चनम्, पार्श्वदेशार्चनं, मध्यवर्त्तिनः पद्मस्य चार्चनं कृत्वा पीठस्थाङ्घ्रिषु अर्घ्यादिकानर्पये दिति सम्बन्धः ॥ ८५ ॥

रत्नमये आसने 'मृदु' कोमला, 'श्लक्ष्णा' मनोहरा 'समाना' रत्नासनतुल्य परिमाणा या तूलिका, तस्यां 'देशिक' देशः अपदेशोऽस्यास्तीति देशिक आचार्य इति ठक् । उपदेष्टा, तत्र 'अर्चयित्वा' सम्पूज्य । पीठाधार मायादिपूजनक्रमं विशदयति, शक्तिमिति । 'शक्त्याधाराख्यकाम्' आधारशक्तिं 'कूर्म्मं' कश्यप

विघ्नं दुर्गां क्षेत्रपालञ्च वाणीं
बीजादिकांश्चाग्नि-देशादिकांश्च।
पीठस्याङ्घ्रिष्वेषु धर्म्मादिकांश्च
नञ्पूर्वां स्तांस्तस्य दिक्ष्वर्च्चयेच्च ॥ ८७ ॥

---

'नाग शेष तौ च पृथिवीलक्षणे च 'भजे' कमले एता स्तास नस्य देवता, स्थानतश्च मध्य प्रकाल्य। तदुक्तम् —

"आधारशक्तिं प्रजपेत् पङ्कजद्वयधारिणीम्।
मूर्ध्नि तस्याः समासीनं कूर्म्मं नीलाभमर्च्चयेत्।
तदूर्द्ध्वं ब्रह्म शिलासीनमनन्तं कुन्द सन्निभम्।
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम्।
तमाल श्यामलां तस्मिन् नीलेन्दीवर धारिणीम्।
अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागर मेखलाम्।
तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्" ॥ इति।

एवं मण्डपान्तं पूजयित्वा मण्डपं प्रविशेत्। द्वारे वि विघ्नाय नमः, दु दुर्गायै नमः, क्ष क्षेत्रपालाय नमः वा वाण्यै नमः, इति बीजादिकान् यथास्थानमभ्यर्च्य अग्नि देशादिकान् धर्म्मादीन्, तदुक्तम्,—

"यजेत् कल्पतरुं तस्मिन् साधकाभीष्ट सिद्धिदम्।
अधस्तात् पूजयेत्तेषां वेदिकां मण्डलोज्ज्वलाम्।
पश्चादभ्यर्च्चयेत्तस्याः पीठं धर्म्मादिभिः पुनः।
रक्त श्याम हरिदिन्द्र नीलाभान् पाद रूपिणः।
वृष केशरि भूतेभरूपान् धर्म्मादिकान् यजेत्।
गात्रेषु पूजयेत्तांस्तु नञपूर्व्वाननुक्रमात्।
आग्नेयादिषु कोणेषु दिक्षु चाद्यान्युजं यजेत्" ॥ इति।

मध्ये क्रमादर्क-विध्वग्नि-तेजां-
स्युपर्य्युपर्य्युत्तमैरर्चितानि ।
रजः सत्त्वं तम एतानि वृत्त-
त्रयं बीजाद्यं क्रमाद्भावयेच्च ॥ ८८ ॥
आशा-व्याशास्वप्ययात्मानमन्तः
स्वात्मानञ्च परमात्मानमन्तः ।
ज्ञानात्मानञ्चार्चयेत्तस्य दिक्षु
माया-विद्ये ये कला पारतत्त्वे ॥ ८९ ॥

---

'षड्क्षु' पादेषु 'नञ्पूर्वान्' धर्म्मादिकान् 'तस्य' पीठस्य 'दिक्षु' पूर्वादिषु ॥ ८६ ॥ ८७ ॥

मध्ये इति । सूर्य्येन्दुवह्नयः क्रमेण पूज्याः, यत् 'वृत्तत्रयं' तत् रजः सत्त्वं तमः एतानि यानि गुणरूपाणि तद्‌बीजाद्यम् 'बीजाद्यं' कलिकारूपं 'क्रमात्' अनुक्रमेण 'भावयेत्' पूजयेत् ॥ ८८ ॥

आशेति । 'आशा व्याशासु' दिक्षु-विदिक्षु च अष्टौ पद्म पत्राणि पूजयेदिति शेषः । अर्च्चयेति । 'आत्मानं' लिङ्गम् 'अन्तरात्मानं' जीवं 'परमात्मानम्' ईश्वरं 'ज्ञानात्मानं' यत्र बिन्दु नाद शक्तियात्मात्मकान् एतान् 'अन्तः' मध्ये अर्च्चयेत् । माया, विद्या, कला, पारतत्त्व' इति तत्त्वञ्च, एतानि चत्वारि तत्त्वानि दिक्षु पूज्यानि । तदुक्तम्,—

"आनन्दकन्दं प्रथमं अविद्यात्ममनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम् ॥
मध्ये प्रकृति पत्राणि विकारमय केसरान् ।

**सम्पूजयेद्विमलादींश्च शक्ती-**
**रभ्यर्च्चयेद्देवमावाहयेच्च ।**

---

पद्मावरणे-बीजाभ्यां कर्णिकां पूजयेत्ततः ।
कलाभिः पूजयेत् मध्ये तस्यां सूर्य्येन्दुपावकान् ।
प्रणवस्य त्रिभिर्मन्त्रैश्च सत्त्वादिकान् गुणान् ॥
आत्मानमन्तरात्मानं परमात्मानमर्च्चयेत् ।
ज्ञानात्मानञ्च विधिवत् पीठं मन्त्रासनात्मकम्" ॥ इति ।
तत्त्वपूजायां, मां मायातत्त्वाय नमः, विं विद्यातत्त्वाय नमः, मं कमलातत्त्वाय नमः, प परतत्त्वाय नमः इति प्रयोगः ॥ ८८ ॥

विमलादींश्चेति । 'विमला' उत्कर्षिणी ज्ञानक्रियायोगेति शक्तयः,

"प्रह्वी सत्या तथेशानानुग्रहा नवमी मता" ।
इत्यासनमन्त्रमुक्तम् ।
"पीठशक्ति-केशरेषु मध्ये च सर्वरामया" ।
इति पीठमन्त्रो नारायणीये उक्तः ।

देवमावाहयेच्चेति, मूलमन्त्रेण आहूतो भव इत्यावा-हनादिमुद्राः प्रदर्शयेत् । ता यथा,—

"आवाहनादिका मुद्रा नव साधारणी मता ।
तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् ॥
हस्ताभ्यामञ्जलिं बद्ध्वानामिका मूलपर्वणी ।
अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता ॥ १ ॥
अधोमुखी त्वियं चेत्स्यात् स्थापनी मुद्रिका स्मृता ॥ २ ॥
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् सन्निधापनी ॥ ३ ॥
अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ॥ ४ ॥

अङ्गव्यूहानि जलाद्यैश्च पूज्य
धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः ॥ ६० ॥

---

उत्तानमुष्टियुगला सम्मुखीकरणी मता ॥ ५ ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ॥ ६ ॥
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥ ७ ॥
अन्योऽन्याभिमुखाश्लिष्टकनिष्ठानामिका पुनः ।
तथैव तर्जनीमध्या धेनुमुद्रा समीरिता ।
अमृतीकरणं कुर्यात् तया साधकसत्तमः ॥ ८ ॥
अन्योऽन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुली ।
महामुद्रेयमाख्याता परमीकरणे बुधैः ।
प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि" ॥ ९ ॥ इति ।

अङ्गव्यूहानीति । 'अङ्गव्यूहानि' हृदयादीनि 'जलाद्यैः' उदकादानाद्यैः पाद्यादिभिः सम्पूज्येत्यर्थः । अङ्गव्यूहानिलजाद्यैरिति पाठे, अङ्गव्यूहैः 'अनिलजाद्यैः' हनुमदाद्यैश्च साकं देवं पूज्येत्यन्वयः । अङ्गव्यूहानलाद्यैरिति तु युक्तः पाठः । 'अनलाद्यैः' नीलाद्यैः षोडशभिः सहेत्यर्थः । तेषां स्थानानि "आग्नेयादिषु कोणेषु हृदयादीनि पूजयेत् । नेत्रमग्रे दिशास्वस्त्रम्" इति ।

अङ्गमुद्रा यथा—

"अङ्गन्यासस्य या मुद्रास्तासां लक्षणमुच्यते ।
अनङ्गुष्ठा ऋजवो हस्तशाखा भवेन्मुद्रा हृदये शिरस्यपि ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां करद्वयाङ्गुलयो वर्मणि स्युः ॥
नाराचमुष्ट्युद्धृतबाहुयुग्मकाङ्गुष्ठतर्जन्युदितो ध्वनिस्तु ।
विष्वग्विषक्तः कथितास्त्रमुद्रा यत्राक्षिणी तर्जनिमध्यमे स्तु ।

वशिष्ठाद्यैर्मुनिभिर्नीलमुख्यै-
राराधयेद्राघवं चन्दनाद्यैः ।
मुख्योपहारैर्विविधैश्च पूज्य
तस्मै जपादींश्च समर्प्य सम्यक् ॥ ८१ ॥

---

नैवेद्यं तथा भवेदनामा षडङ्गमुद्रा कथिता यथावत्" ॥ इति ।
ध्वजादिकैरिति । ध्वजादीनन्ये पठन्ति । तथा हि,—

पूजयेद्देवतापीठे मूर्त्तिं मूलेन कल्पयेत् ।
श्री सीतायै दिगन्तेन सीता पार्श्वगता यजेत् ॥
यजेत् पार्श्वद्वये शार्ङ्गं शरानङ्गानि तद्बहिः ।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम् ।
लक्ष्मणाङ्गदशत्रुघ्नान् जाम्बवन्तं दलेष्विमान् ।
वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥
यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ ।
धृतातपत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत् ॥
दृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् ।
अकोपं धर्म्मपालाख्यं सुमन्त्रञ्च दलाग्रतः ॥
सर्वाभरणसम्पन्नांल्लोकेशानर्च्चयेत्ततः ।
तदस्त्राणि ततो बाह्ये वज्रादीनि च पूजयेत्" ॥ इति । ८०

वशिष्ठाद्यैरिति । वशिष्ठ वामदेव जावालि गौतम भरद्वाज कौशिक वाल्मीकि नारद सनक सनन्दन सनातन सनत्कुमारान् द्वादश कमण्डलुधरान् सर्वान् अक्षसूत्रधरान् मुनीन् द्वादशाग्रे अर्च्चयेत् पूर्वादिक्रमेण च तत्परान् । नीलमुख्यैरिति । नील सुषेण मैन्द शरभ द्विविद धनद गवाक्ष किरीट-कुण्डल-ग्रैवेय कौस्तुभ शङ्ख चक्र गदा पद्मानि षोडशाग्रे अर्च्चयेत्

एवम्भूतं जगदाधारभूतं
रामं वन्दे सच्चिदानन्दरूपम् ।
गदारि-शङ्खाब्जधरं भवारिं
स यो ध्यायेन्मोक्षमाप्नोति सर्वतः ॥ ८२॥
विश्वव्यापी राघवोऽथो तदानीम्
अन्तर्दधे शङ्ख-चक्रे गदाब्जे ।
भूत्वा रमासहितः सात्वतश्च
ससपत्नजः सानुजः सर्वलोकी ॥ ८३ ॥
तद्भक्ता ये लब्धकामांश्च भुक्त्वा
तथा पदं परमं यान्ति ते च ।

---

पूर्वदिक्क्रमेण सनाथनीम् । 'चन्दनाद्यैः' सुगन्धिभिः । जपादीनिति । आदिशब्देन उपचाराः । जपसमर्पणे मन्त्रः,—

"गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादात्त्वयि स्थिता." ॥ इति ।

'सर्वत' सर्वस्मात् बन्धनात् । सर्वः इति तु युक्त. पाठ. ॥ ८१ ॥ ८२ ॥

राघव, अथो, तदानीम्, इति पदच्छेदः । 'अन्तर्दधे' लोकादृश्यो बभूव, न तु देशान्तरं गतः, रामायणेऽपि तेनैव रूपेण ब्रह्मलोके गमनमुक्तम् । 'सात्वत.' आवरणैः परिवारैः सहित, 'ससपत्नज.' सपत्नजेन वैरिसन्तानेनापि सहित, समदर्शित्वात् 'सर्वलोकी' सर्वदर्शी ॥ ८३ ॥

ये तद्भक्ता, ते कामान् लभन्ते, लब्धांश्च कामान् भुक्त्वा परमं पदं यान्ति ।

इमा ऋचः सर्वकामार्थदाश्च
ये ते पठन्त्यमला यान्ति मोक्षम् ।
ये ते पठन्त्यमला यान्ति मोक्षम् ॥ इति॥९४॥१०

इत्यथर्ववेदे रामपूर्वतापनीयोपनिषत् समाप्ता ॥२२॥

---

उपनिषत् पाठे फलमाह, इमा इति। द्विरुक्तिः समाप्त्यर्था। दशावरण पूजा यथ संहितायामुक्ता —

"षट्कोणे प्रथमा वृत्तिः स्यादङ्गैरग्निनं क्रमात् ।
द्वितीयात्मादिभिः प्रोक्ता देवैरष्टाब्जमूलके" ॥ इति ।

तथा, आत्मा १ । निवृत्ति २ । अन्तरात्मा ३ । प्रतिष्ठा ४ । परमात्मा ५ । विद्या ६ । ज्ञानात्मा ७ । शान्ति ८ । इत्यादय ।

"तृतीया वासुदेवाद्यैरष्टपत्रे तथैव च ।
चतुर्थी वासुमुख्याद्यैः पत्राग्रे पूर्ववत् क्रमात् ॥
धृष्ट्याद्यैः पञ्चमी वृत्तिर्द्वितीयाष्टदले तथा ।
षष्ठी द्वादश पत्रेषु नारदाद्यैर्महर्षिभिः ॥
सप्तमी षोडशारे स्याद्नीलाद्यैः कपिपुङ्गवैः ।
ध्रुवाद्यैरष्टमो वा द्वात्रिंशद्दलपङ्कजे ॥
इन्द्राद्यैर्भूगृहे चाद्यैर्नवमावरणं भवेत् ।
तदस्त्रैर्वज्रमुखाद्यैर्दशमावरणं शुभम् ।
दशावरणपूजैव कर्त्तव्या साधकोत्तमैः" ॥ इति ।

पूजायन्ते चैतान्यावरणानि यस्य धारणं यस्मादेव विशेषः । यत्र हि षट्कोणादि भूपुरान्ते देवरूपाणि भवन्ति । धारणयन्त्रे तु सत्यत्वा इति आवरणक्रमोऽप्ययमेव श्रुतौ द्रष्टव्यः पाठक्रमादर्थक्रमस्य बलीयस्त्वात् ।

# रामोत्तरतापनीयोपनिषत्।

ओं बृहस्पतिरुवाच याज्ञवल्क्यम्। यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। तस्माद् यत्र क्वचन गच्छति, तदेव मन्येतेति।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां रामपूर्वस्य दीपिका॥
इति रामपूर्वतापनीयोपनिषदो दीपिका सम्पूर्णा॥ २२॥

---

ओं रामोत्तर तापनीय स्वरूप महिमोच्यते।
रामचन्द्रस्य षट्त्रिंश खण्ड पञ्चक मण्डितम्॥ १॥

ऋषि संवादेन रामचन्द्रस्य मन्त्रतोऽर्थतश्च सविमान स्वरूपञ्च प्रकाशयितुमादौ क्षेत्रोत्तमं विविनक्ति, बृहस्पतिरुवाच याज्ञवल्क्यमिति। यत् क्षेत्रम् 'अनु' हीनं कुरुक्षेत्रं कुरुक्षेत्रादपि यस्मान्महिम्ना अधिकं, कुरुक्षेत्रं हि 'कुरो' ब्रह्मणो वरदानात् क्षेत्रोत्तमं प्रसिद्धं, तस्मु यतो हीनमित्यर्थः। हीने द्योत्ये च अनु कर्मप्रवचनीयम्, तद्योगे यदिति द्वितीया। तथा देवानामपि देवपूजास्थानं, तथा सर्वेषां प्राणिनां ब्रह्मलोकतुल्यं, तत् वाक्यमिति याज्ञवल्क्यं प्रति 'उवाच' तस्मात्तो निद्र तत्र दर्शयेति पप्रच्छेत्यर्थः। याज्ञवल्क्यस्तु उत्तरयन् तावत्तन्नामतो निर्दिशति, अविमुक्तं वै इति। 'अविमुक्तम्' ईश्वरेणापरित्यक्तम् अविमुक्तं वाराणसीक्षेत्रं कुरुक्षेत्रं, कुरु इति

इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृती भूत्वा मोक्षी भवति। तस्मादविमुक्तमेव निषेवेत, अविमुक्तं न विमुञ्चेदेवमेवैतद् याज्ञवल्क्यः॥

प्रथमः खण्डः॥ १॥

---

देवैः पार्थिवेन शिवेन कृतत्वात् कुरुक्षेत्रम्। तथा देवाना मित्यादि विशेषणद्वयम् उत्तरेऽप्यनुदितम्। देशान्तरं तद्वच्छी पात्यमित्याह, तस्मादिति। 'तदेव' अविमुक्तमेव 'मन्येत' जानीयात्।

तस्य मननीयत्वमाह, इदं वा इति। 'इदं' यत्र यत्र विद्यते, तदेव विशेषणत्रययुक्तमविमुक्तमिति मन्येतेत्यन्वयः। एवं कृते सति अविमुक्तनिवासफलं भवतीति भावः। अन्य स्थानेभ्यः क्षेत्रेभ्यः को विशेषः? अत्राह, अत्र हीति। 'जन्तोः' प्राणिमात्रस्य न मनुष्यस्यैव 'तारकं' षडक्षरं मोक्षं वा। तस्य किं फलम्? अत आह, येनेति। 'अमृतीभूत्वा' अमृतीभूय मोक्षी भवति, मोक्षीऽस्याप्नोति अस्मादृचितो भवति। कर्तव्यमाह, तस्मादिति। निषेवत' विस्तमादि। देशान्तरस्थस्यापि मनस्तीत्यत तत्र न विमुञ्चेदिति। 'एवमेवैतत्' भवदुक्त याज्ञवल्क्येति आह बृहस्पतिः, याज्ञवल्क्येनोक्तमर्थं स्वीकृतवान्। 'एवमेव भगवन्' इति पाठे, हे भगवन्। 'एव'



अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यम्, किं तारकं ? किं तरतीति ? । स होवाच याज्ञवल्क्यः, तारकं बिन्दुपूर्वकं दीर्घानलं पुनर्माय नमः, चन्द्राय नमः, भद्राय नमः, इति । ओं तत् ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम् ।

---

भयदुःखोऽयं एव, नान्यथा, इति याज्ञवल्क्य श्रोता बृहस्पतिराह इत्यर्थः ॥ १ ॥

एवं बृहस्पति प्रोक्तार्थतत्त्वं याज्ञवल्क्यं प्रश्नस्वरूपम् आह, किं तारकमिति । ननु तरणक्रिया कर्म्म सविषयमेव इत्याशङ्क्य प्रश्नस्य विषयतामाह, किं तरतीति । यत् 'तरति' संसारं तारयति, तस्य किं स्वरूपमित्यर्थः । तरतिरन्तर्भूतण्यर्थः । यद्वा कर्म्मप्रश्नोऽयं, यस्य गर्भत्वाद्युत्तर भावि, उत्तरमाह, स होवाचेति ॥ 'दीर्घानलं' दीर्घे आकारे आरूढः 'अनलः' रेफः यस्मिन् तत्, तच्च 'बिन्दुपूर्वकं' बिन्दोः पूर्वमेव पूर्वकं रा सिद्धम् । दीर्घानल रा इति । पुनर्माय नमः इति स्वरूपम् । चन्द्राय नमः, भद्राय नमः इति द्वौ मन्त्रौ पृथक् । तदुक्तम्,—

"रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति" ॥ इति ।

ओं रूपा तद्रूपा ब्रह्मरूपा, तथा सदाख्याचिदाख्या आनन्दाख्याचेत्येवमेता रामाद्याख्या उपासितव्या । तदुक्तं गीतायाम्,—

"ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा" ॥ इति ।

अकारः प्रथमाक्षरो भवति, उकारो द्वितीयाक्षरो भवति, मकारस्तृतीयाक्षरो भवति, अर्द्धमात्रश्चतुर्थाक्षरो भवति, विन्दुः पञ्चमाक्षरो भवति, नादः षष्ठाक्षरो भवति, तारकत्वात्तारको भवति ; तदेव तारकं ब्रह्म त्वं विद्धि, तदेवोपास्यमिति ज्ञेयम् ; गर्भ-जन्म-जरा-मरण संसार-महद्भयात् सन्तारयतीति ; तस्मादुच्यते तारकमिति।

य एतत्तारकं ब्राह्मणो नित्यमधीते, स सर्वं पाप्मानं तरति, स मृत्युं तरति, स ब्रह्महत्यां तरति, स भ्रूणहत्यां तरति, स वीरहत्यां तरति, स सर्वहत्यां तरति, स संसारं तरति, स सर्वं तरति, सोऽविमुक्तमाश्रितो भवति, स महान् भवति, सोऽमृतत्वञ्च गच्छतीति।

द्वितीयः खण्डः ॥ २ ॥

---

ओङ्कारात्मिका रामाख्याख्या इत्युक्तम्, तेन रामादीनां तारकत्वमुपपादयितुं ओङ्कारस्य तारकत्वमुपपादयति, 'अकार' इत्यादिना। अकारादयस्त्रयो मूर्त्ताः, अर्द्धमात्रादयस्त्रयोऽमूर्त्ताः, नादात् परे शक्तिशान्तात्यौ अव्यक्ते वेदितव्ये। 'तदेव रा चौभत्सेव प्रणवात्मकत्वाद् ब्रह्मणो वाचकम्, 'अविमुक्त' वाराणसीक्षेत्रम्, यत्र सदा स्थितो वाराणस्यामेव स्थितो भवति,

अथैते श्लोका भवन्ति ;

अकाराक्षर-सम्भूतः सौमित्रिर्विश्वभावनः ।
उकाराक्षर-सम्भूतः शत्रुघ्नस्तैजसात्मकः ॥ १ ॥
प्राज्ञात्मकस्तु भरतो मकाराक्षर-सम्भवः ।
अर्धमात्रात्मको रामो ब्रह्मानन्दैक-विग्रहः ॥ २ ॥
श्रीराम सान्निध्य वशाज्जगदानन्द-दायिनी ।
उत्पत्ति-स्थिति संहार-कारिणी सर्वदेहिनाम् ॥३॥
सा सीता भवति ज्ञेया मूलप्रकृति-सञ्ज्ञिता ।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः । इति ४

---

यत्र तत्र मृतो वाराणस्यामेव मृतो भवतीत्यर्थः । भाविनो भवतीत्यस्यानन्तरं स महान् भवतीति कैश्चित् पठ्यते, तेन भुक्तिरुक्ता, अमृतत्वञ्चेति मुक्तिरुक्ता ॥ २ ॥

प्रणव पदाक्षराणां प्रतिपाद्यार्थमाह मन्त्रैः, अथैते इत्यादिना। 'विश्वभावनः' विश्वाभिधानं जाग्रदभिमानी सङ्कर्षणः 'तैजसात्मकः' स्वप्नाभिमानी प्रद्युम्नः 'प्राज्ञात्मकः' सुषुप्त्यभिमानी अनिरुद्धः रामः ॥ १ ॥ २ ॥

तुरीयावस्था ब्रह्मात्मकस्य विमर्शमाह, श्रीरामेति । भगवन्दस्य सान्निध्यमात्रात् केवलया प्रकृत्या स दातुमशक्यः, कार्यं कर्तुं विन्दते वाच्या कार्योन्मुखी नादांशवाच्या सा रुक्मिणी । सीतायाः शक्तिमात्रात्ये अव्यक्ते आह, प्रणवत्वादिति । वाच्य वाचकभावं त्यक्त्वा प्रणवेन यदाऽभेदं गता, तदा प्रकृतिरिति वदन्ति 'ब्रह्मवादिनः' ज्ञानिनः । इति शब्दः श्लोकसमाप्त्यर्थः ॥ ३ ॥ ४ ॥

चादित्यस्य' सर्वकार्य्यैककारणात्मा, अद्य व्याख्यातम्, शिवरूपं, मङ्गलखरूप ब्रह्म 'अस्मि' भवामि ॥ २० ॥

इदानीं सर्वकारणहीनस्य सर्वज्ञतां स्वस्याह, 'अपाणि पादः' पाणिपादहीन, अद्य व्याख्यातम, 'अचिन्त्यशक्ति' दुर्बोधशक्ति, एवम्भूतोऽपि जवनो ग्रहीतवेग इत्यर्थः, 'पश्यामि' अवलोकयामि, न 'अचक्षु' चक्षुषा हीन, स अचक्षु द्रष्टा, 'शृणोमि' श्रवण करोमि 'अकर्ण' कर्णरहित', अद्य व्याख्यातम्; 'विजानामि' विविध प्रपञ्चजातम् अवगच्छामि, 'विविक्तरूप' बुद्ध्यादि पृथग्रूप, 'न चास्ति' नास्त्येव, 'वेत्ता' कर्म कर्त्तृ भावनावगन्ता, 'मम' आनन्दात्मनो भेदरहितस्य 'चित्' स्वय प्रकाश बोध स्वभाव 'सदा' सर्वदा, अद्य व्याख्यातम् ॥ २१ ॥

इदानीं सर्वशास्त्रप्रतिपाद्यस्यात्मन सर्वविकारभाव दर्शयति, 'वेदै' ऋगादिभि 'अनेकै' बहुभि, अहमेव व्याख्यातम्, 'वेद्य' प्रतिपाद्य, 'वेदान्तकृत्' वेदान्त सूत्रकृत् वेदव्यासरूप, 'वेदविदेव च वेदान्तकृतो विशेषणम्; वेदाना साङ्गाना सावरविद्या स्थानानां वेत्ता वेदवित् स एव, न त्वन्य, चाम्बादनेकतप सम्पन्नस, अद्य व्याख्यातम्, अनेन विभूति मत्तस्त्वेचिदमिव प्रधानमित्युक्तम्। 'न पुण्यपापे' मम स्पष्टम्, न स्त इति शेष, 'नास्ति नाश' विनाशो न विद्यते ममेत्यनुषङ्ग, 'न जन्म' जनि न मम अस्तीत्यनुषङ्ग; 'देहेन्द्रियबुद्धि' देहश्च इन्द्रियाणि च बुद्धयश्च देहेन्द्रिय बुद्धि 'नास्ति न विद्यते, ममेत्यनुषङ्ग.॥ २२ ॥

'न भूमिरापो मम पृथिवी सोदका मम नास्ति इत्यनुषङ्ग, 'वह्नि' प्रसिद्ध 'नास्ति' न विद्यते, ममेत्यनुषङ्ग', 'न चानिलो मेऽस्ति' वायुरपि मम न विद्यते, चकारात् वायवीय कार्य्य